* श्री *



श्री मधुसूदन ग्रन्थमालाया द्वितीयस्तबकस्य प्रथमं प्रसूनम्—



जयपुर-राजकीय—विद्वन्मण्डलसभाप्रधानपण्डितेन महामहोपदेशकेन समीक्षाचक्रवर्ति—

मैथिल श्रीमधुसूदन शर्म्मणा विद्यावाचस्पतिना

प्रणीतस्य पञ्चख्यात्यन्तर्गत पौरवख्यातिग्रन्थस्येयं द्वितीय-परिच्छेदरूपा ॥

# अत्रिख्यातिः ।

लखनऊ विश्वविद्यालय संस्कृताध्यापकेन श्रीमता—
आद्यादत्त ठक्कुरेण सम्पाद्य ॥

पं० रामशङ्कर वाजपेयी प्रबन्धेन, लक्ष्मणपुरे स्टीमर्प्रिंटिंग-मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितः ॥

सन् १९२१ ई०

# पौरवख्यात्यन्तर्गताया अत्रिख्यातेर्विषयसूची।

१ अत्रिमहर्षेश्चन्द्रवंशप्रवर्तकमूलपुरुषत्वम्।

२ पुराणेतिहासेषु अत्रिप्रसङ्गस्थानानि।

३ अत्रेरत्रिनामकरणहेत्वाख्यानम्।

४ अत्रिमहर्षेः स्वभावनिर्देशः।

५ अत्रेर्मूलनिवासस्थानं ब्रह्मपर्षदधिष्ठानं च निरूपितम्।

६ अत्रेस्तपश्चर्यास्थानम्।

७ अत्रिद्वैविध्ये एकोऽत्रिर्ब्रह्मण औरसपुत्रः परो मानसपुत्रः।

८ वैदिकधर्मप्रचारार्थं ब्रह्मणा नियुक्तस्यात्रेरसुरकृतयातनाप्रसङ्गेऽश्विनोकुमाराभ्यां परित्राणम्।

९ ब्रह्मपर्षदधिष्ठातुरस्यात्रेर्ज्योतिषगणितविद्यायामद्वितीयविज्ञानसंपन्नतया कदाचित्सर्वग्रासग्रहणपरिलुप्ते सूर्ये आकस्मिकराव्यन्धकारोपस्थितौ परिक्षुब्धेषु लोकेषु चन्द्रमसः सूर्योपरागहेतुत्वोपपादनेन समाश्वासनाद्विशिष्टप्रतिष्ठालाभः।

१० भद्राश्वराजकन्यानां दशानामत्रिपत्नीत्वम्। तासूत्पन्नैर्दत्तादिभिर्बहुभिः पुत्रैः मुद्गलादिनामकस्वस्यात्रेयवंशप्रवृत्तिः।

११ अत्रिसुतायाः परुष्ण्या अङ्गिरःपत्नीत्वाख्यानम्।

१२ कृशाश्वमुनिकन्यायां घृताच्यामत्रेर्वह्निनैध्रुवादयः पुत्रा आसन्निति मतम्।

१३ अत्रिपुत्राणां सोमदत्तदुर्वाससां सम्बन्धे ऐतिहासिकनानामतदर्शनात् तत्र निर्णयः।

१४ अत्रेः पुत्रस्य सोमस्य योनिजत्वायोनिजत्वविवादे निर्णयः।

१५ अत्रेः सोमस्य च प्राणविधत्वनरविधत्वाभ्यां द्वैविध्ये प्राणविधादत्रेः प्राणविधस्यायोनिजस्य सोमस्योत्पत्तिः। नरविधात्तु तस्मादत्रेर्नरविधस्य योनिजस्य सोमस्योत्पत्तिरिति भेदः।

॥ इत्यत्रिख्यातौ अत्रिचरित्रसूची पूर्णा ॥

# चन्द्रस्य।

१ पुराणेतिहासेषु चन्द्रप्रसङ्गस्थानानि।

२ सोमापरपर्यायचन्द्रपदवाच्यस्यात्रेयस्य जन्माख्यानम्। तत्र समुद्रादेकम्। अत्रिनेत्राद् द्वितीयम्। दिगङ्गनाभ्यस्तृतीयम्। दक्षकन्यायां चतुर्थम्। कर्दमकन्यायां पञ्चमम्। भद्राश्वराजकन्यायां षष्ठम्। इति पृथक्त्वेन षोढा सोमजन्माख्यानात् षोढा प्रतिपन्नानां सोमानामाध्यात्मिकाधिदैविकाधिभौतिकत्वेन पुनस्त्रेधा भेदकरणम्। तत्राधिभौतिकस्य सोमस्येह चन्द्रवंशेतिहासप्रसङ्गे विनियोगः।

३ अत्रिब्राह्मणपुत्रत्वाद् ब्राह्मणस्य सोमस्य ब्रह्मप्रसादेनोत्तरदिक्पालत्वलोकपालत्वलाभात् पश्चात् क्षत्रियत्वप्रतिपत्तिः।

४ पूर्वं राज्ञामेव सतामिन्द्रवरुणसोमानां दिक्पालत्वलोकपालत्वप्राप्त्यनन्तरं राजसूययज्ञकरणात् सम्राट्पदप्राप्तिः।

५ साम्राज्यमदमत्तेन चन्द्रेण परकीयानां काम्यमानानां दशनारीणामपहरणे क्रियमाणे जनतासंघर्षपरिक्षुब्धेन ब्रह्मणा तन्निवारणम्।

६ ततश्चन्द्रो रोहिण्यादिसप्तविंशतिदक्षकन्यापरिग्रहं चक्रे।

७ ऐश्वर्य्यमदमत्तेन चन्द्रेण गुरुपत्नीतारापहरणे कृते सर्वलोकविक्षोभाद्देवासुरसंग्रामप्रसङ्गः।

८ तदिदं चन्द्रकृतं तारापहरणं त्रिवारं समपद्यत। प्रथमं तावद् गुरुदक्षिणाकालं तारापहरणमासीत्।

९ द्वितीयमुद्यानकालं तारापहरणमासीत्।

१० तृतीयं तारापहरणाख्यानं श्रौतं ऋग्वेदसंहितोक्तम्।

११ तत्र गन्धर्वराजस्यैतस्य चन्द्रस्य राज्यतन्त्रव्यवस्थापकैश्चन्द्रसामाज्यलोकपालैरकूपारादिभिरेव स्त्रीसम्बन्धे नूतननीतिव्यवस्थापनमथर्ववेदे व्याख्यातम्।

१२ तारापहरणोपाख्यानस्य ऋग्वेदसंहिताथर्ववेदसंहितयोः श्रूयमाणस्य ज्योतिषविद्यासम्बन्धितया वैज्ञानिकत्वं त्रैविध्येनोपपन्नं भवतीति मनुष्यचरितकत्वाभावः॥

१३ वैज्ञानिकतारापहरणसत्वेपि मनुष्यचरितरूपेण तारापहरणवृत्तान्तस्य प्रत्याख्यानमसंभवमिति प्रतिपादनम्।

१४ उपसंहारे चन्द्रराजचरिताख्यानस्य प्रशंसनम्।

इत्यत्रिख्यातौ चन्द्रराजचरितसूची।

# बुधस्य

१ बृहस्पतिक्षेत्रे चन्द्रौरसाद् गोमतीगङ्गातीरे बुधजन्माख्यानम् । नैमिषक्षेत्रे गोमतीतीरे चन्द्रेण बुधस्य जातसंस्कारादिविधानम् ।

२ बुधस्य राजपुत्रसंज्ञा । बुधेन चानेन राजपुत्रीयं नाम गजशास्त्रं विनिर्मितम् ।

३ बुधस्य राजपुत्रस्य वेशभूषापरिच्छदस्वभावादिवर्णनम् ।

४ वने विहरतो बुधस्य क्वचिदिलया साक्षात्कारः ।

५ प्रतिष्ठानपुराधिष्ठात्र्या मानव्या इलाया उपाख्यानम् ।

६ मतचतुष्टयेन प्रतिष्ठानपुराख्यानम् । तत्र प्रयागे प्रतिष्ठानपुर आसीदिति प्रथमं मतं महतासमारम्भेण व्याख्यातम् ।

७ दक्षिणदेशे दण्डकारण्यप्रान्ते प्रतिष्ठानपुरमासीदिति द्वितीयं मतम् ।

८ कुरुणा हस्तिना पुरूरवसा वा विनिर्मितस्य हस्तिनापुरस्य सन्निधाने क्वचिदिदं प्रतिष्ठानपुरमासीदिति तृतीयं मतम् ।

९ सिन्धुनदात् पश्चिमभागे गन्धर्वदेशे पश्चगौरप्रान्ते प्रतिष्ठानपुरमासीदिति चतुर्थं मुख्यमतमिति सिद्धान्तः ।

१० प्रतिष्ठानपुरसंबन्धेन पठानजातोनामफरीदिनाम्ना प्रसिद्धानां षोडशप्रभेदभिन्नानां दस्युजातोनामिन्द्रकर्तृकविनिग्रहोपाख्यानम् ।

११ वाह्लीक नगराधीशेन केनचिदिलेन सुद्युम्नापरनाम्ना राज्ञा प्रतिष्ठापितं सिन्धुनदात् पश्चिमतो गान्धारदेशे प्रतिष्ठानपुरमासीदितिसिद्धान्तस्थापनम् ।

१२ प्रयागे प्रतिष्ठानपुरमासीदितिमतस्यहस्तिनापुरसन्निधौ प्रतिष्ठानपुरमासीदिति मतस्य वा सपरिकरं खण्डनम् । रामचन्द्रभ्रातुर्भरतस्य पुत्रेण पुष्करेण विनिर्मिता पुष्कलावतीनामनगरी यत्रासीत् तत्रैव संनिधाने क्वचित्प्रदेशे गौरीनदीकूले प्रतिष्ठानपुरमासीदिति सिद्धान्तस्थापनम् ।

१३ इदं प्रतिष्ठानपुरं वैवस्वतेन मनुना विनिर्मितम् । अयोध्यापतिना इक्ष्वाकुणा वा; वाह्लीकनगराधीशेन सुद्युम्नेन वा—इति मतत्रयम् ।

१४ इलासुद्युम्नसंबन्धेन पञ्चमताख्यानम् । इलो वाह्लीकराजः पश्चादिला नाम्नी स्त्री बभूवेत्येकम् । १ ।

सुद्युम्नो नाम तु वाह्लीकराजः पश्चादिला नाम्नी स्त्री बभूवेति द्वितीयम् । २ । अयोध्यापतेरिक्ष्वाकोर्ज्येष्ठा भगिनी काचिदिलानाम्नी पुंस्त्वं स्त्रीत्वं पुनः पुंस्त्वमागत्य दक्षिणदेशीयदण्डकारण्यप्रान्तस्थे प्रतिष्ठानपुरे राज्यं चक्रे । इति तृतीयम् ।

घृतपद्या गौर्वा; पाकयज्ञियकर्मविशेषो वा हुतशेषद्रव्यं वायमिलानामाख्या-

॥ इत्यत्रिख्यातौ बुधराजपुत्रचरित्रसूची॥

॥ इत्यत्रिख्यातिसूची समाप्ता॥

# अत्रेरारभ्य बुधपर्य्यन्तास्त्रिपुरुषः प्रस्तावः-प्रस्तूयते ॥

## २—अत्रिः ।

| | पुरुषः नामान्तराणि | पत्नी | |
|---|---|---|---|
| १ | अत्रिः=भौमात्रिः । सांख्यात्रिः । | अनसूया | |
| २ | चन्द्रः=सोमः=राजा | रोहिणी | |
| ३ | बुधः=रौहिणेयः=राजपुत्रः | इला | |

१ तत्र आदिब्रह्मणो बहुषु पुत्रेषु तृतीयोऽत्रिर्ब्रह्मा चन्द्रवंशप्रवर्तको मूलपुरुष आसीत् ।

२ सोऽयमत्रिर्ब्राह्मस्य सप्तमे, पाद्मे सृष्टिद्वादशे, विष्णुचतुर्थांशस्य षष्ठे, भागवतस्य चतुर्थप्रथमे नवमचतुर्दशे च, मार्कण्डेयस्य षोडशे, अग्नेस्त्रयोदशे, वाराहस्य पञ्चत्रिंशे, मात्स्यस्य त्रयोविंशे, ब्रह्माण्डोपोद्घातस्याष्टमे पञ्चषष्टेच, हरिवंशप्रथमपर्वणः पञ्चविंशे, महाभारतस्य शान्तिकमोक्षधर्मेऽष्टोत्तरद्विशततमे, आनुशासनिकदानधर्मस्य षट्पञ्चाशशते च व्याख्यातः ॥

३ तृतीयप्रजापतित्वादयमत्रिरत्रिशब्देनाख्यायते—इत्युक्तं ब्रह्माण्डे-"अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्यते" इति । ( उ. ४ । ४५ ) द्विविधोऽयमत्रिराख्यास्यते—प्राणविधश्च नरविधश्च। तत्र भृग्वङ्गिरोऽत्रीणां प्राणविधानां क्रमिकोत्पत्त्या तृतीयत्त्व-मत्रेः प्राणस्य बृहद्देवतादावुच्यते। एवं नरविधस्याप्यत्रेस्तृतीयत्वं मानसेषु ब्रह्मपुत्रेषु तृतीयत्वादुपपद्यते । यथोक्तं भारतादिपर्वणः षट्षष्ठाध्याये—

"ब्रह्मणो मानसाः पुत्रा, विदिताः षण्महर्षयः ।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥
अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः" ॥ इति ॥

४ स हि विपुलौजा अपि नितान्तशान्तप्रकृतिः सर्वलोकहितप्रवणश्चासीत् । तदुक्तं ब्रह्माण्डे—

पिता सोमस्य वै विप्रा जज्ञेऽत्रिर्भगवानृषिः
तत्रात्रिः सर्वलोकानां तस्थौ स्वेनौजसा वृतः ॥
कर्मणा मनसा वाचा शुभान्येव समाचरन् ।" इति ॥

५ अस्यात्रेर्मूलनिवासस्थानं ब्रह्मपर्षदधिष्ठानं च विशिष्य न ज्ञायते । महाभारतभीष्मपर्वणि नवमाध्याये—"आत्रेयाः सभरद्वाजा" इति । मार्कण्डेये चतुःपञ्चाशत्तमाध्यायेपि—आत्रेयाश्च भरद्वाजाः पुष्कलाश्च कशेरुकाः । एते देशा ह्युदीच्यास्तु"—इत्येवं देशविशेषस्यात्रेयत्त्वेनाख्यानात् पुरा युगेऽत्रिनिवासोपलक्षितप्रदेशस्य लोके सुप्रसिद्धत्त्वेऽपीदानीं कालदोषेण तदपह्नवादप्रतिपत्तेः ॥ श्वेतगिरिस्थो जनपदविशेषः पुरायुगे तदत्रिस्थानमासीदित्यस्ति बहूनां विश्वासः । यत्तु मात्स्ये पुरूरवसस्तपश्चर्य्याप्रसंगे ॥

स गच्छन्नेव ददृशे हिमवन्तं महागिरिम् ।
खमुल्लिखद्भिर्बहुभिर्वृतं शृंगैस्तु पांडुरैः ॥ १ ॥
तस्यैव पर्वतेन्द्रस्य प्रदेशं सुमनोरमम् ।
अगम्यं मानुषैरन्यैर्दैवयोगादुपागतः ॥ २ ॥
मेघश्यामस्त्वसौ देशो द्रुमखण्डैरनेकशः ।
ऐरावती सरिच्छ्रेष्ठा यस्माद्देशाद् विनिर्गता ॥ ३ ॥
तच्चाश्रमपदं पुण्यं बभूवात्रेः पुरा नृप ।
तत्प्रसादात् प्रभायुक्तं स्थावरैर्जङ्गमैस्तथा ॥ ४ ॥
हिमपातो न तत्रास्ति समन्तात् पञ्चयोजनम् ।
उपत्यका सुशैलस्य शिखरस्य न विद्यते ॥ ५ ॥
तत्रास्ति राजन् शिखरं पर्वतेन्द्रस्य पाण्डरम् ।
हिमपातं घना यत्र कुर्वन्ति सहिताः सदा ॥ ६ ॥
तत्रास्ति चापरं शृङ्गं यत्र तोयघना घनाः ।
नित्यमेवाभिवर्षन्ति शिलाभिः शिखरं वरम् ॥७॥
तदाश्रमं मनोहारि यत्र कामधरा धरा ।
सुरमुख्योपयोगित्वाच्छाखिनां सफलाः फलाः ॥ ८ ॥
तदाश्रमं समन्ताच्च हिमसंरुद्धकन्दरैः ।
शैलवाटैः परिवृतमगम्यं मनुजैः सदा ॥ ९ ॥
तत्र यौ तौ महाशृङ्गौ महावर्णौ महाहिमौ ।
तृतीयं तु तयोर्मध्ये शृङ्गमत्यन्तमुच्छ्रितम् ॥ १० ॥
तस्याधस्ताद्वृक्षगणो दिशां भागे च पश्चिमे ।
जातीलतापरिक्षिप्तं विवरं चारुदर्शनम् ॥ ११ ॥
तमसा चातिनिविडं नल्वमात्रं सुसंकटम् ।
नल्वमात्रमतिक्रम्य स्वप्रभाभरणोज्ज्वलम् ॥ १२ ॥
न तत्र सूर्यस्तपति न विराजति चन्द्रमाः ।
तथापि दिवसाकारं प्रकाशं तदहर्निशम् ॥ १३ ॥

इत्येवं षोडशाधिकशततमादिभिः कतिपयाध्यायैः कश्चिदत्रेराश्रमो महता परिकरेण व्याख्यातः । सोऽप्यस्य तपश्चर्य्याप्रदेशोऽनुमीयते निर्जनारण्यप्रदेशत्वात् ।

वक्ष्यमाणेन तु परुष्णीकथानकेनाप्यस्य प्रदेशस्य सपरिवारात्रिनिवासस्थानत्वं चिरकालिकतपश्चरणार्थमेव स्यान्न त्वयं तस्य मुख्यो देशः। तस्य प्रदेशस्य मनुष्यलोकान्तरिक्षलोकयोः सीमारूपतया वायुपुराणादौ व्याख्यातत्वादन्तरिक्षलोकादप्युत्तरवर्तिदेवलोकनिवासिनस्तस्यात्रेर्मनुष्यलोकोपक्रमदेशनिवासित्वायोगात् ॥ × ॥ यदपि च—मेरुसंनिधाने देवनिकायगिरौ वा तदत्रितीर्थमुक्तं तदप्यस्य तपश्चर्य्यास्थानं नतु निवासस्थानम्। ब्राह्मे गौतमीमाहात्म्यस्य सप्ततितमाध्याये (७०) यदात्रेयतीर्थमुक्तं, चित्रकूटे दण्डकारण्ये प्रयागे वा यदात्रेयतीर्थमुच्यते तदत्रिवंशधराणामुत्तरेषां केषांचिदत्रीणां स्थानं प्रतिपद्यते नत्वाद्यस्यात्रेः॥उत्तरेषां त्वनेकस्थानानि स्मर्यन्ते। भारतशान्तिमोक्षधर्मे स्वस्तिकाध्याये प्राच्यां स्वस्त्यात्रेयस्य, पश्चिमायामत्रेः पुत्रस्य, उदीच्यामात्रेयस्य च निवासाख्यानादिति दिक् ॥

६ एष हि त्रीणि वर्षसहस्राणि शक्तिविशेषलाभार्थमृक्षपर्वतेऽनुत्तमन्तपस्तेपे इत्याहुः। तत्र सहस्रशब्दः पूर्णार्थः। सर्वं वै सहस्रम्–" इति श्रुतेः। पूर्णत्वं च वर्षाणां मासवासरादिभिरन्यूनानतिरिक्तत्वम्। अनुत्तममिति मात्स्यादिपाठस्थानेऽनन्तरमिति पाद्मादिपाठः। अनन्तरमनवच्छिन्नम्। सुदुश्चरमिति च ब्रह्माण्डादिषु पठ्यते। ऋक्षपर्वतोऽयं भारतवर्षे प्रसिद्धः। तापीपयोष्णीनिर्विन्ध्याकावेरीप्रमुखा नदीः॥ प्रवर्त्तयति यः सोऽयमृक्षो नाम कुलाचलः ॥१॥ (ब्राह्मे १७)॥ इत्यभियुक्तोक्तेः। वस्तुतस्त्वत्रितपःस्थानमयमृक्षः स्वर्गभूमिस्थः कश्चिदन्योगिरिः स्यान्नत्वयं भारतवर्षीयः। आद्यस्यात्रेः स्वर्गवासितया स्वर्गभूमिं परित्यज्य मनुष्यलोकेऽस्मिन् भरतखण्डे तपश्चर्य्यार्थमनुधावनस्य विचारायोग्यत्वात् ॥

७ एष खल्वत्रिर्वसिष्ठादिवदस्य ब्रह्मणो मानसः पुत्र आसीत्। द्विविधं हि पुरा युगे ब्रह्मणः पुत्रमाचक्षतेस्म औरसं मानसं चेति। स्वधर्मपत्न्यां स्वरेतसोत्पादितः पुत्र औरसः। यस्त्वन्यौरसोऽपि ब्रह्मणा स्वपुत्रत्वेन भावितोऽभूत् स मनसा पुत्रत्वेन कृतत्वान्मानस इत्युच्यतेस्म। " मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। ब्रह्मणो मानसाः पुत्रा वसिष्ठश्चेति सप्त ते"—इत्येते सप्ताऽप्यन्यौरसा एव पुत्रत्वेन ब्रह्मणा परिगृहीतास्तत्तल्लोकमण्डले धर्मोपदेशार्थं धर्मे शासनार्थं च ब्रह्मपरिषदधिष्ठानेऽधिष्ठातृतया प्रतिष्ठापिता अभवन्। वस्तुतस्तु प्रथमोऽयमत्रिरौरस एव ब्रह्मणः पुत्र असीत्। अत्रेर्मानसपुत्रत्वं तु सांख्याऽयपेक्षया द्रष्टव्यमित्याहुः ॥

८ पौराणिका आहुः। अत्रिरयं ब्रह्मणा वेदप्रचारार्थं नियुक्त आसीत्। तेन वैज्ञानिकयज्ञप्रचारकरणेन हेत्वन्तरेण वा परिक्रुद्धा असुरास्तमत्रिमृषिं सपुत्रकलत्रपरिवारगणमृबीसनाम्नि पीडायन्त्रगृहे प्रवेश्य तुषाग्निना अबाधिषत। ततस्तेनर्षिणा स्तुतावश्विनौ नासत्यदस्रौ देवौ तमग्निमुदकेनोपशमय्य तस्मात् पीडागृहादविकलेन्द्रियवर्गं सन्तं निरगमयताम्। असुरकृतपीडया कार्श्यं प्राप्तायात्रये बलप्रदं क्षीरादिकमन्नं च पुष्ट्यर्थं प्रायच्छतमिति ऋक् संहितायां प्रथममण्डले षोडशशतसूक्ते महर्षिः कक्षीवानाह—( १। ११६। )॥

"हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्त ॥
ऋबीसे अत्रिमश्विनाऽवनीतमुन्निन्यथुः सर्वगणं स्वस्ति" ॥ १ । ११६ ।
ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥ १।११७।३॥ इति॥

हे अश्विनौ युवां हिमेन शीतोदकेनात्रिदाहार्थमसुरैः प्रक्षिप्तमतिप्रज्वलितं तुषाग्निं निवारितवन्तौ। पितुमतीमूर्जमन्नवतीं बलप्रकृतिमत्रये प्रायच्छतम्। ऋबीसेऽपगतप्रकाशे पीडायन्त्रगृहेऽवनीतमवाङ्मुखतयाऽसुरैः प्रापितं सर्वगणोपेतमत्रिं स्वस्ति यथा भवति तथा उन्निन्यथुः। तस्माद् ऋबीसनामकात् कारागृहादुद्गमय्य स्वगृहं प्रापितवन्तौ"—इति प्रथमस्यार्थे सायणभाष्यम् ॥१॥ द्वितीयस्य हे नरौ। प्रजापति-वरुण-वाग्-वाय्वग्निसहयोगेन जनितत्वात् पाञ्चजन्यम्, ऋषिपितृदेवतिर्यग्मनुष्य-भेदेन पञ्चधा विभक्तानां देवयुगसंबन्धिनराणामभ्यर्हणीयत्वाद्वा पाञ्चजन्यम्। अथवा—अनु-द्रुह्यु-तुर्वसु-यदु-पुरूणां पञ्चशाखाविभक्तानां राजवंशानामेव पुरायुगे मनुष्यत्वेन पञ्चजनत्वेन च देवैर्व्यवस्थापितत्वात् तेषां पञ्चजनानामयमत्रिर्मूलपुरुषत्वादाराध्यो बभूवेति कृत्वा सोऽत्रिः पाञ्चजन्यः प्रसिद्ध आसीत्। अतः पाञ्चजन्यं तमृषिमत्रिं पुत्रकलत्रादिपरिवारगणेन सह तस्मादृबीसनामकात् कारागृहाद् युवां मुञ्चथः। अशिवस्यानिष्टकरस्य दस्योरसुरस्य मायाः, निगडबन्धनादि-विषयकछलव्यापारसंबन्धिनीर्मिनन्तौ नाशयन्तौ, अनुपूर्वं पूर्ववत् स्थितिं प्रचोदयन्तौ प्रवर्तयन्तौ च युवां तमत्रिमृबीसादमोचयतमित्यर्थः ॥

६ अथात्रेय्यां ब्रह्मपर्षदि प्रतिष्ठितेऽस्मिन्नत्रिवंशे ग्रहनक्षत्रादिज्योतिर्विद्यापरीक्षणं विशिष्य प्रचरितमासीत्। प्रथमात्रिकाले हि कदाचित् सर्वग्रासे सूर्यग्रहणे जाते तत्कारणनिर्धारणाय तदानीन्तना बहव एव विद्वांसः प्रयतन्तेस्म। किन्तु सर्वप्रथमं तेष्वात्रेयपर्षदधिष्ठातारोऽत्रय एव याथातथ्येन तत्कारणमवधारयामासुः तत्र यदवधारितं तद्गणितोपपादनपरो विद्याग्रन्थस्तु तस्यामात्रेयपर्षद्येवाधिष्ठितोऽभूत्। तदितिवृत्तं तु केवलं पञ्चभिर्मन्त्रैर्ऋक्संहितायामुपनिबध्यते—( ५ । ४० । ५–६ )॥

यत्त्वा सूर्य्य स्वर्भानुस्तमसा विध्यदासुरः ।
अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः ॥ १ ॥

स्वर्भानोरध यदिन्द्रमाया अवो दिवो वर्तमाना अवाहन् ।
गूढं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥ २ ॥

मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा निगारीत् ।
त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥ ३ ॥

ग्राव्णो ब्रह्मा युयुजानः सपर्य्यन् कीरिणा देवान्नमसोपशिक्षा ।
अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरपमाया अघुक्षत् ॥ ४ ॥

यं वै सूर्य्यं स्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन् ॥ ५ ॥ इति ॥

अयमत्राभिसन्धिः । अभिजितं नाम ब्रह्माणं परितः सूर्योऽयं परिक्रामति । तस्य ब्रह्मणो रश्मिगताः सर्वे प्राणा ऋषय उच्यन्ते । चन्द्रमसि स्वतः कृष्णवर्णे प्रतिमूर्छितैः सूर्य्यरश्मिभिरुत्पन्नायां ज्योत्स्नायां स्थिताः नाना-धर्मविभक्ताः प्राणाः मध्यमाः पितर उच्यन्ते । पृथिव्यामप्येवं प्रतिमूर्छिते सूर्य्यकिरणेऽवराः पितरो भवन्ति । सूर्यरश्मिगतास्तु प्रकाशमयाः सर्वे प्राणा नानाधर्मविभक्ताः सर्वे देवा उच्यन्ते । चन्द्रे पृथिव्यां वा सूर्य्यप्रतिदिग्भागे सूर्य्यकिरणप्रतिबन्धात् तमोमये वियति संचरन्तः प्राणा असुराः कथ्यन्ते इति हि वैदिकी परिभाषा श्रुतिप्रसिद्धा ब्रह्मविज्ञाने सुविशदं निरूपिता । तत्र तस्य चन्द्रस्य पृथिव्याश्चेयं खभागव्याप्ता छायामयी भूभापि सर्वासुरप्राणसंभृतत्वादसुर एवोच्यते । तस्य छायामयस्यासुरस्य तमो राहुः स्वर्भानुरित्येताः संज्ञाः स्युः । अन्धकारमयत्वात् तमः । सूर्य्यांशुराहित्येन कृतमूर्तित्वाद्राहुः । सूर्य्यमण्डलं स्वः—"एषा गतिरेषा प्रतिष्ठा य एष तपति । तस्य ये रश्मयस्ते सुकृतोऽथ यत्परंभाः प्रजापतिर्वा स स्वर्गो वा लोक"—इतीष्टियाजमानश्रुतेः ॥ सूर्य्यमण्डलोपलक्षिते प्रतिदिग्भागे भानुभूभोपलक्षितप्रदेशव्याप्तियोग्यःप्रकाशो नियमेन यस्यास्ति स स्वर्भानुः । एष चोभयपार्श्वगतसूर्य्यकिरणयोः कर्त्रीरूपयोः संपातेन छिन्नशिरा दृश्यते । त्रिविधोऽयं राहुः एकः पार्थिवो द्विविधश्चान्द्रश्च । तत्र पार्थिवः सैंहिकेयोऽप्युच्यते । पृथिव्याः सिंहिकारूपेण श्रुतौ निरूपितत्वात् ॥ तदुक्तं लैङ्गे सप्तपंचाशाध्याये—"द्विविधः सूर्य्यविस्ताराद् विस्तारः शशिनः स्मृतः । तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात् प्रसर्पति ॥ १॥ उद्धृत्य पृथिवीच्छायां निर्मितां मण्डलाकृतिम् । स्वर्भानोस्तु बृहत् स्थानं तृतीयं यत्तमोमयम्" ॥ २ ॥ इति ॥

सूर्यमण्डलविष्कम्भाच्चन्द्रविष्कम्भः कदाचिदल्पो भवति कदाचित्तु महान् भवति । कदाचिदुच्चैन कदाचिन्नीचेन च पथा चन्द्रपरिभ्रमणात् । कटकग्रासखग्रासाभ्यां सूर्यग्रहणस्य द्वैविध्येन तथा प्रतिपत्तेः । अनयोर्द्वयोः पार्थिवेन राहुणा चन्द्रग्रहणं भवति । चान्द्रेण तु राहुणा सूर्य्यग्रहणं सिध्यति । तदेतदनया श्रुत्या निरूप्यते ॥

हे सूर्य्य ! आसुरोऽसुरनिकायस्वरूपोऽयं स्वर्भानुर्यदा त्वां तमसा चन्द्राधस्तनकृष्णच्छायया अविध्यदावृणोत् । तदा भुवनानि सर्वे लोका अदीधयुर्देवयामासुरज्ञानेन व्यामोहिता बभूवुः । यथा गन्तव्यं क्षेत्रमजानानः कुत्र गच्छामीत्येवं व्यामुग्धो भवति तथा कुत्र सूर्य्योऽगात् किमिदमभूत् कथमकाण्डेऽन्धकारोभवदित्यादिरूपेण व्यामोहमापुः ॥ १ ॥

द्विविधः सूर्य्यः—चित्यश्चितेनिधेयश्च । दृश्योऽयं ज्योतिष्मान् पिण्डश्चित्यः । तदन्तर्गर्भः प्राणात्मा तु चितेनिधेयः स इन्द्रः । "यथाग्निगर्भा पृथिवी तथा द्यौरिन्द्रेण गर्भिणीति श्रुतेः । तथा च प्रथमं शरीरपिण्डाभिप्रायेणोक्त्वा संप्रति

तत्प्राणाभिप्रायेणापरमुच्यते—स्वर्भानोरिति । अधेत्ययथार्थो निपातः । अपरं च हे इन्द्र ! दिवोऽवः सूर्य्यमण्डलादधोदेशे वर्तमानः स्वर्भानोर्मायाः । अन्यथासत्यन्यथा प्रतीयमाना वा साधारणैरज्ञेयतत्वा वा, निगूहितयाथार्थ्यभावा वा, प्रयुज्यमाना प्रक्रिया माया । तथा चैता लोकविस्मयकारिण्यो राहोर्माया यदा सूर्य्यमवाहन् अवरुध्यालोपयन् तदा अपवर्तनीयेन तमसा प्रच्छन्नं सूर्य्यमयमत्रिर्महर्षिस्तुरीयेण ब्रह्मणा "ग्राव्णो ब्रह्मे"ति चतुर्थमन्त्रोपात्तेन विज्ञानप्रकारेणाविन्दत्=सूर्य्यं विलुप्तं पुनरलभत । तत्रैव दिवि यथावत्स्थितमजानादित्यर्थः ॥ २ ॥

उक्तं पूर्वम्—यत्र यत्र वस्तुन्यारम्भकविधयाऽयमत्रिप्राण उपादीयते तद्वस्तु कठिनं भवत् पारदर्शकत्वाद्विहीयते । तेन प्रत्याहतः सूर्य्यरश्मिः परावर्तितो भवतीति । तदनुसारेणेह तृतीयो मन्त्रः सूर्य्यमुखेनार्थमाह । मामामिममिति । हे अत्रे ! चन्द्रमण्डलारम्भकात्रिप्राण ! इमं मां सूर्य्यं तव सन्तं चन्द्रमण्डलं प्रत्युपस्थितरश्मित्वाच्चन्द्रगतात्रिप्राणानुगतत्वाच्चात्रिप्राणानुगृहीतं द्रुग्धो द्रोग्धाऽसुरः स्वर्भानुरिरस्याऽन्नेच्छया ग्रसनाभिप्रायेण भियसा भयंकरतमसा मा निगारीत् मा निगिलतु । सर्वथा विलुप्तं मा करोतु । प्रतिवस्तु नियता शक्तिः सत्यमिति ब्रह्मविज्ञाने व्याख्यातम् । चन्द्रगतवस्तुशक्तिसाधितस्त्वमत्रिप्राणो मित्रोसि वरुणो राजा चासि । उभयसांमुख्येन परस्पराभिगमनं मित्रत्वम् । विरुद्धदिग्वृत्या प्रत्यावरणं वरुणत्वम् । सूर्य्यमण्डलाधस्तनस्य चन्द्रमण्डलस्योपरिभागे मित्रोऽस्तीति सूर्य्यरश्मयः प्रतिरुद्धाश्चन्द्रेण वियुज्यन्ते । अहर्वै मित्रो रात्रिर्वरुण इति श्रुतेः । तत्रायं मित्रो वरुणो वा चन्द्रगतस्त्वमत्रिप्राण एवासि । यदि चन्द्रेऽत्रिप्राणो नाभविष्यत् तदा तस्य पारदर्शकत्वप्राप्त्या सूर्य्यरश्मिप्रतिबन्धायोगान्मित्रो वरुणो वा नाभविष्यताम् । अतोऽत्रिभूतौ तौ मित्रवरुणौ युवां मां सूर्य्यमिह स्वर्भानुग्रासकाले अवतम्=अवगमयतम् । अवतिरवगमार्थः ॥ चन्द्रस्याधस्ताच्चन्द्रेणावरोधादयं सूर्य्यो न दृश्यते । चन्द्रस्योपरिष्टात्त्वयं सूर्य्योऽनवरुद्धः पूर्ववद् दृश्यत एवेत्यतो नायं सूर्य्यो विलुप्तोऽस्तीत्यर्थो मित्रवरुणाभिज्ञानादवगम्यते ॥ ३ ॥

अत्रिमहर्षिः पूर्वं ग्रहणकाले सूर्य्यं द्रष्टुं कंचिदपूर्वं यन्त्रविशेषं निर्मापयामास । ग्रावकीरिनमांसि तस्यैव यन्त्रस्याङ्गानि संभाव्यन्ते । उपरागकाले सूर्य्यादर्शने सति सोऽत्रिर्ब्रह्मा ग्राव्णो युञ्जन्, कीरिणा देवानाराधयन्, नमसा प्रसाधयन् सूर्य्यस्य दिवि सूर्य्योपलक्षिताकाशभागे स्वं चक्षुराधात् । तेनायं स्वर्भानोर्मायाः परान्मोहयन्तीः प्रक्रिया अपायुक्षत्=न्यवारयत् ॥ अत्रिकृतयन्त्रस्येदानीमनुपलब्धेस्ततः सूर्य्यदर्शनप्रकारस्तदवयवभूतानि ग्रावकीरिनमांस्यपि यथावन्न ज्ञायन्ते इति भाव्यम् ॥ ४ ॥

---

# उपसंहरति ।

पुरा युगे सूर्य्योपरागतत्त्वविविदिषया कृतप्रयत्नेषु तदानींतनकृतविद्येषु यं यं सूर्य्यंभासुरः स्वर्भानुस्तमसाऽविध्यत्। यदा यदा सूर्य्योपरागोऽभवत् तदा तदा तमत्रय एवान्वविन्दन् नान्ये विद्वांसो यथावज्ज्ञातुं तमशक्नुवन् ॥ ५ ॥ इति ॥

एतच्छ्रुतिमूलकमेवार्थं पौराणिका आख्यानकरूपेणोपन्यबध्नन् । तथा हि भारतेऽनुशासनपर्वणि दानधर्मे भीष्ममुखेनाहुः+

"घोरे तमस्ययुध्यन्त, सहिता देवदानवाः ।
अविध्यत शरैस्तत्र, स्वर्भानुः सोमभास्करौ ॥ १ ॥
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः ।
अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनम् ॥ २ ॥
अथैनमब्रुवन् देवाः, शान्तक्रोधं जितेन्द्रियम् ।
नाधिगच्छाम शान्तिं च, भयात् त्रायस्व नः प्रभो ॥ ३ ॥
कथं वक्ष्यामि भवतस्तेऽब्रुवंश्चन्द्रमा भव ।
तिमिरघ्नश्च सविता, दस्युहन्ता च नो भव ॥ ४ ॥
एवमुक्तस्तदात्रिर्वै, तमोनुदभवच्छशी ।
अभवत् सौम्यभावाच्च, सोमवत् प्रियदर्शनः ॥ ५ ॥
दृष्ट्वा नातिप्रभं सोमं, तथा सूर्य्यं च पार्थिव ।
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे ॥ ६ ॥
जगद्वितिमिरं चापि प्रकाशमकरोत्तदा ।
व्यजयच्छत्रुसंघाँश्च देवानां स्वेन तेजसा ॥ ७ ॥
अत्रिणा दह्यमानांस्तान्, दृष्ट्वा देवा महासुरान् ।
पराक्रमैस्तेऽपि तदा, व्यत्यघ्नन्नत्रिरक्षिताः ॥ ८ ॥
उद्भासितश्च सविता, देवास्त्राता हतासुराः ।
अत्रिणा त्वत्र सामर्थ्यं, कृतमुत्तमतेजसा ॥ ९ ॥ इति ॥

अत्र स्मार्ते कथानके सर्वोऽर्थः श्रुत्यर्थानुसारेण नेयः । तद्विरुद्धोऽर्थस्तु काल्पनिकत्वादुपक्षेप्य इति तत्त्वम् ॥

सूर्य्येऽकस्मात् खग्रासेन ग्रस्ते सर्वतोऽन्धकाराच्छन्ने भयभीतेषु देवेषु सत्सु चन्द्रकृतमिदं सूर्य्यस्यावरणं न त्वन्यद्भयकारणमस्तीत्यत्रिणा स्वविद्यया देवानां भयनिरासः कृतः, ततः परितुष्टैर्देवैस्तस्मा अत्रये वरदानं दत्तमित्याथर्वणश्रुतौ श्रूयते- "आदित्यं हि तमो जग्राह । तदत्रिरपनुनोद । तदत्रिरन्वपश्यत् । तदप्येतदृचोक्तम् "स्तुताद्यमत्रिर्दिवमुन्निनाय" । दिवित्वऽत्रिरधारयत् सूर्य्या मासाया कर्तवे" इति । तं होवाच—वरं वृणीष्वेति ॥ सहोवाच-दक्षिणीया मे प्रजा स्यादिति । तस्मादात्रेयाय प्रथमदक्षिणा यज्ञे दीयन्ते इति ॥ (गोपथपूर्वभागे २।१७) ॥ एतेन पुरा देवयुगे-

ऽपि पारितोषिकप्रदानप्रचारो गम्यते । शाश्वतिकयशःप्रतिष्ठालाभार्थं स्मारकविधया धर्म्मविशेषव्यवस्थापनमेव च पारितोषकं विशिष्यासीदिति च गम्यते ॥ अत्रिगोत्रेभ्यो यज्ञे प्रथमं दक्षिणा दीयते इति हि तत एवारभ्य यज्ञे देवैः कृता व्यवस्था प्रथमात्रिकीर्तिस्मारिकाद्यापि प्रवर्तत इति च गम्यते इति बोध्यम् ॥

१० अथैतस्मिन् समये भद्राश्वो नाम कश्चिद्राजासीत् । तस्याप्सरसि घृताच्यां प्रभाकरो नामैकः पुत्रो दश चान्याः कन्या जज्ञिरे—भद्रा शूद्रा मद्रा शलभा मलदा बला हला गोचपला तामरसा रत्नकूटा चेति । ताः सर्वा अप्ययं भद्राश्वस्तस्मै अत्रये भार्य्यात्वेन प्रददौ । तासां भद्रायामत्रेः पुत्रः सोमो जज्ञे । स ब्रह्मयोनिरपि ब्रह्मणः प्रसादेन ब्राह्मणगन्धर्वादीनां राज्येऽभिषिक्ततया पश्चात् क्षत्रियः समपद्यत । अथान्यास्वप्यत्रिभार्य्यासु कतिपये पुत्रा बभूवुः । दत्तः, दुर्वासाः, अकल्मषः, सत्यनेत्रः, दीप्तिमान्, आपोमूर्तिः, तरुणः निष्प्रकम्पः, युक्तः—इत्यादयः । सर्वे चैतेऽत्रिवंशधरा ब्राह्मणाः स्वस्त्यात्रेया उच्यन्ते । तेषु दत्तो दुर्वासाश्चेति द्वौ ब्राह्मणौ विख्यातौ बभूवतुः । तत्र दत्तगोत्रान्वये श्यावाश्वा मुद्गला वाग्भूतका गविष्ठिरा इति चतुर्विधा अत्रयः पुरा युगे देवलोके मनुष्यलोके च सुप्रसिद्धा आसन् ।

॥ तदिदमुक्तम् ब्रह्माण्डोपोद्घातेऽष्टमाध्याये ॥

अत्रेर्वंशं प्रवक्ष्यामि तृतीऽस्य प्रजापतेः ।
तस्य पत्न्यस्तु सुन्दर्य्यो दशैवासन् पतिव्रताः ॥ १ ॥
भद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ।
भद्रा शूद्रा च मद्रा च शलभा मलदा तथा ॥ २ ॥
बला हला च सप्तैता या च गोचपला स्मृता ।
तथा तामरसा चैव रत्नकूटा च तादृशी ॥ ३ ॥
तत्र यो वंशकृच्चासौ तस्य नाम प्रभाकरः ।
मद्रायां जनयामास सोमं पुत्रम् यशस्विनम् ॥ ४ ॥
स तासु जनयामास पुत्रानात्मसमानकान् ।
स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः ॥ ५ ॥
तेषां द्वौ ख्यातयशसौ ब्रह्मिष्ठौ सुमहौजसौ ।
दत्तो ह्यनुमतो ज्येष्ठो दुर्वासास्तस्य चानुजः ॥ ६ ॥
यवीयसौ सुता तेषामबला ब्रह्मवादिनी ।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते ॥ ७ ॥
तस्य गोत्रान्वया जाताश्चत्वारः प्रथिता भुवि ।
श्यावाश्वा मुद्गलाश्चैव वाग्भूतकगविष्ठिराः ॥ ८ ॥

॥ इति ॥

अत्राबलाशब्दो लेखप्रमादादपपाठः । ऋक् संहितायाम् अष्टममण्डले एकनवतिसूक्तस्य द्रष्ट्र्या ऋषिकाया अपाला नाम्ना प्रसिद्धेः । अपालाभिप्रायेणैवायमबलाशब्दः पठ्यते । ब्रह्मवादिनीत्वाभिमानात् । अपालाविश्ववाराभ्यामात्रेयीभ्यामन्यस्या आत्रेय्या ब्रह्मवादित्वास्मरणात् ॥ ४ ॥

(अ)

११—ब्राह्मे तु गौतमीमाहात्म्ये (७४) परुष्णीकथानकमुक्तम्—

अत्रिराराधयामास, ब्रह्मविष्णुमहेश्वरान्।
तेषु तुष्टेषु स प्राह पुत्रा यूयं भविष्यथ ॥ १ ॥
तथा चैका रूपवती कन्या मम भवेत् सुराः।
ततः पुत्रत्वमापुस्ते, ब्रह्मविष्णुमहेश्वराः ॥ २ ॥
कन्यां च जनयामास, शुभात्रेयीति नामतः।
दत्तः सोमोऽथ दुर्वासाः, पुत्रास्तस्य महात्मनः ॥ ३ ॥
अग्नेरङ्गिरसो जातो, ह्यङ्गारैरङ्गिरा ऋषिः।
तस्मा अङ्गिरसे प्रादादात्रेयीमतिरोचिषम् ॥ ४ ॥
अग्नेः प्रभावात् परुषमात्रेयीं सर्वदाऽवदत्।
आत्रेय्यपि च शुश्रूषां कुर्वती सर्वदाऽभवत् ॥ ५ ॥
सा कदाचिद् भर्तृवाक्यादुद्विग्ना परुषाक्षरात्।
कृताञ्जलिपुटा दीना प्राब्रवीच्छ्वशुरं गुरुम् ॥ ६ ॥
पतिर्मां परुषं वक्ति वृथैवोद्वीक्षते रुषा।
प्रशाधीमं सुरज्येष्ठ भर्तारं मम दैवतम् ॥ ७ ॥

अग्निरुवाच।

अङ्गारेभ्यः समुद्भूतो भर्ता ते ह्यङ्गिरा ऋषिः।
यथा शान्तो भवेद् भद्रे तथा नीतिर्विधीयताम् ॥ ८ ॥
श्वशुरस्य तु तद्वाक्यं श्रुत्वात्रेयी तदैव तत्।
आग्नेयं रूपमापन्नमम्भसाप्लावयत् पतिम् ॥ ९ ॥
उभौ तौ दम्पती ब्रह्मन् संगतौ गाङ्गवारिणा।
शान्तरूपधरौ चोभौ दम्पती संबभूवतुः ॥ १० ॥
भर्तारं प्लावयन्ती सा दधाराम्बुमयं वपुः।
परुष्णी चेति विख्याता गङ्गया संगता नदी ॥ ११ ॥
तत्र चाङ्गिरसश्चक्रुर्यज्ञांश्च बहुदक्षिणान्।
विशेषतस्तु गङ्गायाः परुष्ण्या सह संगमे ॥ १२ ॥

॥ इति ॥

परुष्णीतीयमिरावत्याः पञ्चनदान्तर्गताया वैदिकीसंज्ञा। "इरावतीं परुष्णीत्याहुः"—इति यास्कनिरुक्तात्। (९।२६) इरावतीनिर्गमप्रदेशोऽत्रिस्थानमासीदिति वायुपुराणे उक्तम्। तत्रात्रिप्राणस्य भूयसोपसंनिधानात् स्वानुकूल्यं दृष्ट्वा नरविधोऽप्यत्रिस्तत्र चिरं तपस्तेपे। अत्रिप्राणप्रसाधनमेवास्य तपश्चरणम्। अत्रिप्रधान-

स्थानात्प्रवर्तमानत्वादस्याः परुष्णया अत्रिकन्यात्वमारोप्यते । सात्रिस्थानादागत्याङ्गिरःस्थानमागतेति विवाहकल्पना क्रियते अङ्गिरःस्थानं च यज्ञप्रधानस्थानत्वादग्निप्रायस्थानमेव । तच्च दृषद्वत्यापया सरस्वतीशतद्रूविपाशैरावतीभिर्नदीभिरुपलक्षितप्रदेशरूपम् । "नि त्वा दधे वर आ पृथिव्या इडायास्पदे सुदिनत्वे अह्नाम् ॥ दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि"—( ३ । २३ । ४)

इति मन्त्रे इडायास्पदे इत्यनेन यज्ञाग्निदीपनप्रदेशस्यैरावतीपर्य्यन्तत्त्वावगमात् अथवा, ब्रह्मावर्तीयब्रह्मपर्षदधिष्ठातायमङ्गिरा ब्रह्मा पश्चिमस्थाया इरावत्या अर्वागेव यज्ञोपयुक्तभूमिं व्यवस्थापयन् यतो नेरावतीप्रदेशं यज्ञार्थं रोचयते तत एवाहुरात्रेयीं परुषं भाषत इति । अङ्गिराश्चात्र यज्ञाग्निवर्तत इत्यत आहुरात्रेयी हीयमग्निगतमङ्गिरसं शमयामासेति । गङ्गेति काचिदिरावत्यां सङ्गता शाखानदी स्यात् ॥ तदिदमाधिदैविकं वृत्तमाधिभौतिकोपाख्यानविधयोपनिबद्धम् । वस्तुतस्तु नेयमात्रेयी परुष्णीनाम्रिका काचिन्मनुष्यविधात्रिकन्यासीत् । आध्यात्मिकाधिदैविकयोरप्यर्थयोराधिभौतिकत्वेनोपरज्योपाख्यानकरणस्य पौराणिकस्वभावसिद्धत्वात् ॥

१२—यत्तु-अत्रेः पुत्रोऽभवद्वह्निः सोदर्य्यस्तस्य नैभ्रुवः । कृशाश्वस्य तु विप्रर्षेर्घृताच्यामिति नः श्रुतम् ॥ १ ॥ स तस्यां जनयामास स्वस्त्यात्रेयान्महौजसः । वेदवेदाङ्गनिरतांस्तपसा हतकिल्बिषान् ॥ २ ॥" इति कौर्म्मे ऊनविंशाध्याये उक्तम् । तत्रायं लेखकदोषादस्ति कश्चित्त्रुटितः पाठ इति संशोधनीयत्वादुपेक्ष्यते ॥ ० ॥

१३—अथैषां सोम-दत्त-दुर्वाससां संबन्धेनापि कतिपये पौराणिका भ्रान्त्या बहुभक्तिवादमाहुः । विष्णुपुराणे ( १ । १० । ८ ६ ) तावदेकस्या एवानसूयाया गर्भे त्रयाणामेषामुत्पत्तिरुच्यते । भागवते ( ८ ७ ) चात्रेर्ऋक्षपर्वते तपश्चरतः पुत्रार्थमीश्वरमाराधयतस्तपसा परितुष्टा ब्रह्मविष्णुमहेश्वराख्यो देवाः सहैवागता आकाशमार्गे स्थित्वा तमत्रिमूचुः । त्रयो देवा वयमेक ईश्वर इति कृत्वेश्वराराधनया प्रसन्ना वयं स्वस्वांशैस्त्रयस्ते पुत्रा भविष्याम इति । ततो ब्रह्मा स्वांशेन चन्द्रो, विष्णुः स्वांशेन दत्तात्रेयः, शिवः स्वांशेन दुर्वासा इत्येवं त्रयः पुत्रा अत्रेरुद्बभूवुरित्युक्तम् ॥ परे त्वाहुः । अत्रेरस्य भार्य्याऽनसूया पतिव्रताऽसीत् । तस्याः पातिव्रत्यपरीक्षार्थं ब्रह्मविष्णुमहेश्वराः सहात्र्याश्रममागत्य नग्नावस्थायामनसूयातो भिक्षामर्थयामासुः । तेषां तथा चरितं दृष्ट्वा सा पातिव्रत्यप्रभावेण सद्यस्तान् बालकान् भावयामास । ततः सावित्रीलक्ष्मीपार्वतीनाम् प्रार्थनया तान् बालकत्वादुन्मोच्य पूर्वावस्थां प्रापय्य सावित्र्यादिभ्योऽर्पयामास । ततस्त्रयस्ते ब्रह्मविष्णुमहेश्वराः स्वस्वांशसंयोगादेकां मूर्तिं कल्पयित्वाऽनसूयायाः पुत्रत्वमङ्गीचक्रुः । तैर्दत्तत्वात् दत्तात्रेयं तमाचक्षते ॥ इति ॥ अत्र मते दत्तात्रेयस्त्रयाणामंशेभ्य उत्पन्नोऽभूत् । पूर्वमते तु त्रयाणां पृथगंशैः पृथगुत्पन्नेषु त्रिषु पुत्रेषु दत्तोऽयं केवलाद्विष्णोरंशादुत्पन्न इति भेदः । वस्तुतस्तु देवयुगे चिरंतनादत्रेरिमे सोमदत्तादयोऽभूवन् । न च तत्र युगे ब्रह्मविष्णुमहेश्वराख्यानां त्रयाणां देवानामेकेश्वरान्वाख्यानं सुप्रतिपन्नमासीत् । वेदमन्त्रेषु कुत्रापि तेषां त्रयाणां तथा साहचर्य्याख्यानानुपलब्धेः । तस्मादश्रौतोऽयमर्थो नातीव

श्रङ्गेय इत्युपेद्यते ॥ महाभारतशान्तिपर्वणः सप्तोत्तरद्विशततमाध्याये सोमश्चार्यमा चेति द्वावत्रिपुत्रावाख्यातौ ॥ ( शां० २०७ । १० ). तत्रान्येषामुत्तरोत्तरात्रिपुत्रत्वेऽपि बहुवचनस्वारस्यात् सोमस्य प्रथमात्रिपुत्रत्वं निःसंदिग्धं प्रत्येतव्यम् ॥ ४ ॥

१४—अत्र केचित् प्रत्यवतिष्ठन्ते । सोमोऽयं नात्रेरौरसः स्वधर्मपत्न्यामनसूयायामुत्पन्नः पुत्र आसीत् किन्तु अत्रिनेत्रपरिस्रुतजलतोऽयमुत्पन्नत्वादयोनिजः पुत्रो द्रष्टव्यः । ऐतिहासिकसमये तथैव भूयसा स्मरणात् । तथाहि ब्रह्माण्डोपोद्घाते हरिवंशेच—( १.६५ ).

"पिता सोमस्य वै विप्रा जज्ञेऽत्रिर्भगवानृषिः ।
काष्ठकुड्यशिलाभूत ऊर्ध्वबाहुर्महाद्युतिः ॥ १ ॥
सुदुश्चरं नाम तपो येन तप्तं महत्पुरा ।
त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ॥ २ ॥
तस्योर्ध्वरेतसस्तत्र स्थितस्यानिमिषस्य ह ।
सोमत्वं तनुरापेदे महाबुद्धिः स वै द्विजः ॥ ३ ॥
ऊर्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः ।
नेत्राभ्यामस्रवत् सोमो दशधा द्योतयन् दिशः ॥ ४ ॥
तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा ।
समेत्य धारयामासुर्न च ताः समशक्नुवन् ॥ ५ ॥
स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रसाधितः ।
पपात भासयँल्लोकान् शीतांशुः सर्वभावनः ॥ ६ ॥
यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः ।
ततः सहाभिः शीतांशुर्निपपात वसुन्धराम् ॥ ७ ॥
पतन्तं सोममालोक्य ब्रह्मा लोकपितामहः ।
रथमारोपयामास लोकानां हितकाम्यया ॥ ८ ॥
स हि वेदमयो विप्रा धर्मात्मा सत्यसंगरः ।
युक्ते वाजिसहस्रेण रथेऽभ्यास्तेति नः श्रुतम् ॥ ९ ॥
स तेन रथमुख्येन सागरान्तां वसुन्धराम् ।
त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणम् ॥ १० ॥
तस्य यद्दर्हितं तेजः पृथिवीमन्वपद्यत ।
ओषध्यस्ताः समुद्भूतास्तेजसा ज्वलयंत्युत ॥ ११ ॥
ताभिः पुष्णात्ययं लोकान् प्रजाश्चापि चतुर्विधाः ।
पोष्टा हि भगवान् सोमो जगतो हि द्विजोत्तमाः ॥ १२ ॥
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः ।
बीजौषधीनां विप्राणामपां च द्विजसत्तमाः ॥ १३ ॥

॥ इति ॥

एवमेव मात्स्ये पाद्मे चोक्तम् । तथा चात्रेः स्वधर्मपत्न्यां समुद्रायां सोमोऽयमौरसः पुत्रोऽभूदिति विप्रतिपन्नमिति चेदत्र ब्रूमः—

१५—नरविशेषस्यात्रेर्नेत्रप्रस्रवणोदकान्नरविधस्य सोमस्योत्पत्तिरभूदित्येवं तावन्न प्रतिपत्तव्यम् । श्रुतिस्मृतितात्पर्यविरुद्धतया तस्यार्थस्य नितान्तभ्रान्तकत्वात् अपि तु नरविधस्यात्रेः स्वधर्मपत्न्यामेव नरविधः सोमो जज्ञे । अनरविधस्य त्वत्रेरश्रुजलादनरविधः सोमो जज्ञे इत्यर्थपृथक्त्वात् सोमोत्पत्तिद्वैविध्यं द्रष्टव्यम् । तथाहि—

१६—वैदिकीनामितिहासश्रुतीनां त्रिपथगात्त्वं ब्रह्मप्रसङ्गे पूर्वमाख्यातम् । ततो भाषान्तरीकृताः पुराणनामानः सृष्टीतिहासाः प्रायेणाधिदैविका एव सन्तोऽध्यारोपेणाध्यात्ममधिभूतं चोपनीयन्ते । तत्रैते चरित्रनायका ऋषिपितृदेवासुरगन्धर्वादयोऽर्था अध्यात्मं शरीरारम्भका इष्यन्ते । अधिदैवतं ते ब्रह्माण्डव्यापिनो निरूढा यौगिका वा प्राणाः स्युः । अधिभूतं तु ते सर्वेऽपि प्राणिनो नरा अपेक्ष्यन्ते । तत्रैतेषामाध्यात्मिकाधिदैविकाधिभौतिकानां लक्ष्याणां यत्र यत्रैवार्थेषु प्रक्रियासाम्यं लक्ष्यते त एवार्थाः प्रायेणेतिहासमर्य्यादयोपनिबध्यन्ते । यत्र तु पूर्वापरसाम्यभूयस्त्वेऽपि क्वचित् क्वचिदंशे वैषम्यमापतति तत्र सर्वार्थसामञ्जस्येनोपपादनाशक्यत्वादितिहासलेखकस्येच्छानुरोधेनैतदधिकरणत्रयतः कंचिदेकमेव पक्षं गृहीत्वा सन्दर्भयोजना क्रियते इति पौराणिकः समयोऽभ्युपगम्यते ॥ तदनुसारेण प्रकृतेऽप्यत्रेः सोमोत्पत्तावेकत्र ब्रह्माण्डोपोद्घातेऽधिभूतपक्षमेव प्रधानीकृत्य भद्रायां पत्न्यामत्रेः पुत्रः सोमो व्याख्यातः । सिन्धुनदात् पश्चिमे देशे निवसतां गन्धर्वाणां राज्ञः सोमस्य तथैवात्रेरुत्पन्नत्वात् ॥ अन्यत्र पुनराधिदैवतपक्षमेव प्रधानीकृत्य तप्यमानस्यात्रेर्नेत्रप्रस्रवणरसात् सोमोत्पत्तिराख्यायते । आधिदैविकस्येमां पृथ्वीं परितश्चरतश्चन्द्रस्य तथैवात्रेरुत्पन्नत्वात् ॥ इत्थं चाधिभौतिकान्नरजातीयादत्रेः स्वधर्मपत्न्यां भद्राख्यायामनसूयायामुत्पन्नो गन्धर्वजातीयो नरविधश्चन्द्रो भिन्नः । आधिदैविकात्तु प्राणजातीयादत्रेर्नेत्रप्रसुतरसादुत्पन्नो दिवि प्रकाशमानः पृथिवीं परितः क्रममाणोऽयं चन्द्रो भिन्नः । तयोरुत्पत्तिप्रकारभेदेऽप्यत्रिजातत्वं साधर्म्यम् ॥

या रुक् परात्रिजातस्य, शशिनः सज्जनस्य च ।
न सा वै रात्रिजातस्य, तमसो दुर्जनस्य च ॥

इत्यादौ दिविष्ठचन्द्राभिप्रायेण यथात्रिजातत्वमुच्यते तथाऽनाधिदैविकयोर्दत्तदुर्वाससोरात्रेययोः सजातभ्रातृभावेनोक्तस्य नरविशेषस्य चन्द्रस्याप्यत्रिजातत्वोपपत्तेः । तत्र नरविशेषस्य चन्द्रस्यात्रेरनसूयायामुद्भवाख्यानं निर्विवादम् । दिविष्ठस्य तु चन्द्रमण्डलस्योत्पत्तिः कथमभूदिति जिज्ञासायां प्रस्तुतेनानेन चन्द्रोत्पत्तिप्रकरणेनाकाशचारिसोमोत्पत्तिस्थितिरहस्यं सुविज्ञानं भवति ॥ ॥

१७—तथाहि तत्रैतत् सोमोत्पत्तिविवक्षया ब्रह्मणोऽत्रेरुत्पत्तिस्तावदाख्यायते—अस्ति खलु सर्वजगद्व्यापी सूक्ष्मोऽव्यक्तः कश्चिदव्याकृतोऽर्थः तत्राशनायावशात्

क्षोभः समभवत् । अनात्मन्विनी तावदादावशनायाऽऽसीत् । तन्मनोऽकुरुत । आत्मा मे स्यादिति । ततः स्वयमत्रार्कः कश्चिदशनायावानभवत् । अप्सु सर्वजगद्बीजं हिरण्यगर्भो ब्रह्मा वायुमयः प्रादुरभूत् । यावदशनायाऽऽसीत् तावदग्निस्तावदापः । तदिदमेकं हिरण्मयमण्डलमुच्यते । हिरण्यमित्यग्निरेतसां संज्ञा । तद्गर्भे यो नभ्य आत्मा वायुः स हिरण्यगर्भो ब्रह्मा । स एवैतस्मिन् ब्रह्माण्डे सृष्टिकर्ता । सोऽग्निमयश्चापोमयश्चेति द्विधाभूतस्ताभ्यां स्त्रीपुंभ्यामिव भागाभ्यां विराजमुदपादयत् । चित्यः कश्चित् परिच्छिन्नो यज्ञमयोऽन्नमयोऽग्निर्विराट् । सेयं पृथ्वी नाम । स तप्यमानोऽन्तरगर्भे चिते निश्चेयं नामाग्निमजनयत् । तमग्निं मनुरित्याचक्षते पौराणिकाः ॥ मनोर्मरीच्यादयो दश प्राणा अभवन् ॥

सोऽयमर्थस्तावद् वाजसनेयश्रुतौ श्रूयते—

"नैवेह किञ्चनाग्र आसीत्—मृत्युनैवेदमावृतमासीत्—अशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुत आत्मन्वी स्यामिति । सोऽर्चन्नचरत् । तस्यार्चत आपोऽजायन्त । आपो वा अर्कः । तद्यदपां शर आसीत् तत्समहन्यत । सा पृथिव्यभवत् । तस्यामश्राम्यत् । तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततताग्निरिति" ॥ एतदनुसारेण मनुरप्याह—

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥ १ ॥
ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥ २ ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥ ३ ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ ४ ॥
यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥ ५ ॥
द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥ ६ ॥
तपस्तप्त्वाऽसृजदयं स स्वयं पुरुषो विराट् ।
तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥ ७ ॥
प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परम् ॥ ८ ॥
एनमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्मशाश्वतम् ॥ ९ ॥
अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश ॥ १० ॥

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्राचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ ११ ॥
एते मनूंस्तु सप्तान्यानसृजद् भूरितेजसः ।
देवान् देवनिकायांश्च महर्षींश्चामितौजसः ॥ १२ ॥
मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणामाद्यानां पुत्राः पितृगणाःस्मृताः ॥ १३ ॥
ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः ।
देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनु पूर्वशः ॥ १४ ॥ इति ॥

१८—नायं मनुर्विराजोऽतिरिच्यते । चित्यचितेनिधेययोः समानायतनत्त्वेनैक-पुरुषत्वाभिमानात् । विराट् चायं हिरण्यगर्भान्नातिरिच्यते । हिरण्यगर्भप्राणस्यैव चित्या तदुत्पत्तेः अत एवैषां मरीच्यादीनां मनुजन्यत्त्वमिव विराड्जन्यत्वं ब्रह्मज-न्यत्वं च पुराणोक्तं न विरुध्यते एषु च मरीच्यादिषु भृग्वङ्गिरोऽत्रीणामुत्पत्तिं शौनकः प्राह बृहद्देवतायाम्—

"त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ।
आहरत् सहितः साध्यैर्विश्वैर्देवैः सहेति च ॥ १ ॥
तत्र वाग् दीक्षणीयायामाजगामाशरीरिणी ।
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ॥ २ ॥
शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्यद् यदृच्छया ।
ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा ऋषिः ॥ ३ ॥
प्रजापतिसुतौ दृष्ट्वा दृष्टा वागभ्यभाषत ।
आभ्यामृषिस्तृतीयोऽपि भवत्वत्रैव मे सुतः ॥ ४ ॥
प्रजापतिस्तथेत्याह भाषमाणां तु भारतीम् ।
ऋषिरत्रिस्ततो जज्ञे सूर्य्यानलसमद्युतिः ॥ ५ ॥ इति ॥

प्रजापतिरत्र संवत्सरः सौरः । तस्य त्रैवार्षिके पृथिव्या योगे पार्थिवप्रजापतेः प्राणस्य महिमा वागुपसृत्य वाय्वादिवदशरीरिणी सती पृथिव्या बहिर्धाऽभवत् । तत्र दक्षवरुणयो रसौ वायुभूतौ संश्लिष्टावभूताम् । दक्षस्तावदयं दशदिग्भ्यः स्वयं प्रस्रवतां प्रचेतो नाम्नां रसानां संयोगजन्मा दिक्सोममयः प्राणः । सोऽनवरतमिह पृथिव्यामुपसर्पति । एवं सूर्य्यमण्डलप्रकाशतो बहिश्चतुर्दिक्षु परिव्याप्तादम्भः समुद्रा-दापोमयः प्राणः पृथिव्यामुपसर्पति स वरुणः । तयोश्च पृथिव्या रसे वाङ्मये प्राणे संस्रवो भवति ॥ पञ्चभूतानामादिभूतमाकाशनामकं तत्वं सर्वजगद्व्यापीह पार्थिवप्राणसंलग्नं तत एवोद्भूतं विवद्यते । तेषां संघर्षादग्निर्वसुरुदभवत् । तस्मिन्नग्नि-स्वरूपे भृग्वङ्गिरोऽत्रयः प्राणाः संभवन्ति तत्र अर्चिषि भृगुः संबभूवेति । भृगुवारुणि-रिति । अङ्गारेष्वङ्गिराः संबभूवेति । त्वमग्ने अङ्गिराः प्रथम ऋषिरिति श्रुतिभ्यो वरुणांशतो भृगुरग्न्यंशतस्त्वङ्गिरा अभ्युपगम्यते । अग्निस्त्वत्र पृथिव्या आत्मा पृथ्वीतो बहिर्भवन् सांवत्सरः । अथ यावानिह वाचिको भाग उदपतत् सोऽत्रिर्नाम

प्राणो भवति। यथाऽर्चिषि भजनप्रधानः पचमानः पच्यमानो वा वारुणो भागो भृगुर्नाम जायते। यथा वा पार्थिवे काष्ठादि घनद्रव्ये गर्भगतो रक्तोऽर्थो दहनकाले दृश्यते स वस्तुतो घनकृष्णवर्णः काष्ठाद्यङ्गिरस्त्वादङ्गिरःशब्देनोच्यते। तथायं दह्यमानः काष्ठादिर्वहिःस्थितं वायुरसादनर्थमात्मनि येनाकृष्य स्वदिति स भोक्ता प्राणोऽदनप्राधान्यादत्रिर्नाम्नोच्यते। उत्पत्तिरियमत्रेरुक्ता।

१६ अत्रेदं कश्चित् प्रत्यवतिष्ठते। असमञ्जसमिदं शौनकोक्तमत्रिजन्माख्यानम्। तथाहि। कस्याथ वरुणस्य चेति ब्रुवन् शौनकः पूर्वसतः कस्य वरुणेन योगादत्र्युत्पत्तिमभिप्रैति। स च कस्तावद्दक्षो नाम प्रजापतिरुच्यते। तस्य चात्रिवंशप्रसूतादर्वाक्कालिकात् प्राचीनबर्हिषः सवर्णायां सामुद्रचाम् उत्पन्नेभ्यो दशभ्यः प्रचेतोभ्यो मारिषायां वार्क्ष्यां सोमकन्यायामर्द्धेन सोमांशेनार्द्धेन प्रचेतोंऽशेन च पश्चादुत्पत्तिराख्यायते विष्णुपुराणे प्रथमांशे पञ्चदशाध्याये ब्राह्मप्रथमाध्याये च॥ महाभारतशान्तिपर्वणि मोक्षधर्मे स्वस्तिकाध्याये।

"अत्रिवंशे समुत्पन्नो ब्रह्म योनिः सनातनः।
प्राचीनबर्हिर्भगवांस्तस्मात् प्रचेतसो दश॥ १॥
दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः।
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते॥ २॥"

इति

हविर्धानाद्धिषणायां प्राचीनबर्हिरभूत्। अन्तर्द्धानात् शिखण्डिन्यां बहिर्धानोऽभूत्। पृथोरन्तर्द्धानः। वेनात् पृथुः। अङ्गाद्वेनः। अङ्गस्त्वयमत्रिवंशेऽभवदित्येवमयं प्राचीनबर्हिरत्रिवंशजः। तथा चात्रिवंशे बहूत्तरकालप्रजातेन केनातिप्राचीनस्यात्रेरुत्पत्तिकथनं नावकल्पते इति। अत्र ब्रूमः। द्वौ दक्षौ। स्वायम्भुवमन्वन्तरीयो ब्रह्मपुत्र आद्यः। स चात्रिसमजन्मनो मरीचेरपि पूर्वजः।

"अथान्यान् मानसान् पुत्रान् सदृशानात्मतोऽसृजत्।
भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा॥ १॥
मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसान्।
नव ब्रह्मण इत्येते पुराणे निश्चयं मतम्॥ २॥ इति विष्णुपुराणोक्तः॥
अंगुष्ठात् ससृजे ब्रह्मा मरीचेरपि पूर्वजम्।
सोऽभवत् भरतश्रेष्ठ दक्षो नाम प्रजापतिः॥ ३॥"

इति भारते शान्तिपर्वणि मोक्षधर्मे सर्वभूतोत्पत्त्यध्यायोक्तश्च॥ अन्यस्तु चाक्षुषमन्वन्तरीयः सोमांशकृतार्द्धेभ्यो दश प्रचेतोभ्यो वार्क्ष्यां मारिषात्रामुत्पन्नः॥

"तेजोभिरुदिताः सर्वे महर्षिसमतेजसः।
दश प्रचेतसः पुत्राः सन्तः पुण्यजनाः स्मृताः॥

तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः ॥"

इति भारतादिपर्वणि संभवपर्वोक्तेः ॥ क इत्युभयोः समानं नामान्तरम् । तत्र पूर्वस्माद्दक्षाद्वरुणयुक्तादत्रेर्जन्म स्यात् । अत्रेश्च वंशे पश्चात् पुनरन्यो दक्षः : प्राचेतसः प्रजातः स्यादिति नासमञ्जसं भवति ॥ ४ ॥

इह हि हि मतत्रयं भवति । एके तावदाचक्षते—

कः प्रजापतिरुद्दिष्ट इत्यभियुक्तोक्तेः प्रजापतिवचनोऽयं कशब्दः प्रजापतिमात्रसाधारणो नैकान्ततो दक्षमेवाचष्टे बहवस्तु प्रजापतयो भवन्ति दक्षादयश्च तेषां पतिर्ब्रह्मा चेति । तत्र ब्रह्मैवेह प्रजापतिः स्यात् । भारतानुशासनपर्वणः पञ्चाशीतेऽध्याये सुवर्णदानधर्मे साधारणेन ब्रह्मशब्देनैव तदुल्लेखात् तथा हि तदुक्तिः संक्षिप्य दर्श्यते—वशिष्ठ उवाच—

"अपि चेदं पुराधीतं श्रुतं मे ब्रह्मदर्शनम् । पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥१॥
महादेवस्य रुद्रस्य वारुणीं बिभ्रतस्तनुम् । यज्ञः प्रववृते तत्राजग्मुरग्न्यादिदेवताः २
तत्राग्नेर्विविशुस्तस्य शरीरं सर्वदेवताः। एतस्मात् कारणादाहुरग्निं सर्वास्तु देवताः ३
संजुहावात्मनात्मानं स्वयमेव तदा प्रभुः । यज्ञं च शोभयामास बहुरूपं शिवस्तदा॥४
देवीदीक्षापि तत्रासीद् यज्ञेरुद्रस्य वारुणे । स्वयंभुवस्तु तां दृष्ट्वा रेतःसमपतद्भुवि ५
तस्य शुक्रस्य विस्पन्दात्पाँशून्संगृह्य भूमितः।प्रास्यत्पूषा कराभ्यां वै तस्मिन्नेव हुताशने६
ततस्तस्मिन् संप्रवृत्ते सत्रे ज्वलितपावके । ब्रह्मणो जुह्वतस्तत्रप्रादुर्भावो बभूव ह ॥ ७
शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयस्तदा । पुरुषा वपुषा युक्ताःस्वैःस्वैः प्रसवजैर्गुणैः८
भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराभवत् । अत्रैवात्रेति च तमो जातमत्रिं वदन्त्यपि९
सहज्वालाभिरुत्पन्नो भृगुस्तस्माद्भृगुःस्मृतः।अङ्गारसंश्रयाच्चैवकविरित्यपरोऽभवत्१०
अङ्गारेभ्योऽङ्गिराजातो बालखिल्याःकुशोच्चयात्।मरीचिभ्यो मरीचिस्तु मारीचःकश्यपोऽभवत् ॥ ११ ॥
ततोऽब्रवीन्महादेवो वरुणःपवनात्मकः । मम सत्रमिदं तस्मात् त्रीण्यपत्यानिसन्ति मे१२
अग्निरुवे ममांगेभ्यस्तान्यभूवन्ममाश्रयात्। ममैव तान्यपत्यानि वरुणो ह्यवशात्मकः१३
अथाब्रवील्लोकगुरुर्ब्रह्मालोकपितामहः । ममैव तान्यपत्यानि मम शुक्रं हुतं हि तत् १४
अहं कर्ताहि सत्रस्य होताशुक्रस्य चाप्यहम् । यस्य बीजं फलं तस्य मच्छुक्रजमिदं मम१५
ततोऽब्रुवन् देवगणाः पितामहमुपेत्य ते । तवैव प्रसवाः सर्वे वरुणोऽग्निः परे च ये१६
भृगुं पूर्वमपत्यं तु जग्राह वरुणः शिवः । ततः स वरुणाख्यातो भृगुः प्रसवकर्मकृत्१७
ईश्वरोऽङ्गिरसं त्वग्नेरपत्यार्थमकल्पयत् । आग्नेयश्चाङ्गिरास्तस्मात् कविर्ब्राह्मो महायशाः ॥ १८ ॥
एते हि प्रसवाः सर्वे प्रजानां पतयस्त्रयः । सर्वं सन्तानमेतेषामिदमित्युपधारय ॥ १९

॥ इति ॥

( भा० अनु० ८५ अ० )

एतच्च वासिष्ठं विज्ञानं शौनकसमानार्थं नेयम् । तस्मादत्रिजन्मनि नास्ति दक्षस्य सम्बन्धः । वायुमयस्य हिरण्यगर्भस्य वा, विराजोऽग्नेर्वा, वैराजस्य मनोर्वा सम्बन्धस्य तत्रेष्यमाणत्वात् । तस्माददोषः ॥ १ ॥

(२१) अथवा येषां मते दक्ष एवायं को नाम । तेषामपि नास्त्ययं दोषः ।

ननु प्राचेतसस्य दक्षस्याप्यत्रिवदेवात्रिसमकालं हिरण्यगर्भपौत्राद्वैराजात् स्वयम्भूमनोरुत्पत्तिर्मनुस्मृतावुच्यते ।

"मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्राचेतसं वसिष्ठं च भृगुं नारदमेव च" ॥ इति ॥

तस्मान्नात्रिवंशे पश्चादुत्पन्नः प्राचेतसो दक्ष इति चेन्न । प्रचेतोजनितस्यापि दक्षस्य मनुजन्यत्वाविशेषाभिप्रायेण तथोक्तेः । ब्रह्मपुत्रदक्षस्य प्राचेतसदक्षस्य च स्वरूपादिसाधर्म्यानुबोधनाय वा तथोक्तेः ॥

(२२) अथवा पौराणिकैरेवात्र समाहितम् । यथा ब्राह्मे प्रथमाध्याये—"मारिषा नाम कन्यैषा वृक्षाणामिति निर्मिता । भार्या वोऽस्तु महाभागाः सोमवंशविवर्धिनी ॥१॥ युष्माकं तेजसोऽर्धेन ममचार्धेन तेजसा । अस्यामुत्पत्स्यते विद्वान्दक्षो नाम प्रजापतिः२॥ इत्थं सोमस्य वचनाञ्जगृहुस्ते प्रचेतसः । संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम्३॥ दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । दक्षो जज्ञे महातेजाः सोमस्यांशेन भो द्विजाः"४ इत्थं दक्षस्य प्राचेतसत्वे निरूपिते मुनयः पृच्छन्ति । "संभवस्तु श्रुतोऽस्माभिर्दक्षस्य च महात्मनः । अङ्गुष्ठाद्ब्रह्मणो जज्ञे दक्षः किल शुभव्रतः ॥५॥ कथं प्राचेतसत्वं स पुनर्लेभे महातपाः । दौहित्रश्चैष सोमस्य कथंश्वशुरतां गतः ॥ ६ ॥ इत्थं प्रश्ने समाधत्ते "उत्पत्तिश्च निरोधश्च नित्यं भूतेषु भो द्विजाः । ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये जनाः ७ युगे युगे भवन्त्येते पुनर्दक्षादयो नृपाः । पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥८॥ ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीद्द्विजोत्तमाः । तप एव गरीयोभूत् प्रभावश्चैव कारणम् ॥ इति ॥ तथा चैतेषां दक्षादीनां युगभेदेन नानात्वविवक्षणादस्य दक्षस्य सोमदौहित्रत्वं श्वशुरत्वं वा सर्वमेवोपपद्यते—इत्यविरोधः ॥

वयं तु ब्रूमः । पुराणाख्यातेष्वाख्यातानां चरित्रनायकानां त्रिविधः सृष्टिकल्पो विवक्ष्यते तात्त्विकसृष्टिकल्पः, आध्यात्मिकसृष्टिकल्पः, मानुषसृष्टिकल्पश्च । तत्र तात्त्विकाध्यात्मिककल्पयोः—पदार्थविद्यायां नैतदेवं व्यामोहनं कार्य्यम् । पदार्थानां क्वचित्पुत्रपौत्रादिभ्योऽपि पितृपितामहादीनामुत्पत्तेर्दृश्यमानत्वात् । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवीत्येवं तैत्तिरीयश्रुतावग्नेरपां जन्मोच्यते । "कंस्विद्गर्भं प्रथमं दध्र आपः"—इति प्रश्नश्रुतौ त्वग्निमपां गर्भजमाहुः ॥ अग्नेरापोऽद्भ्यः पृथिवीत्यग्नेः पौत्रीं पृथिवीमाहुः । "यदपां शर आसीत् तत्समहन्यत, सा पृथिव्यभवत् । तस्यामश्राम्यत् । तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्ततताग्निः"—इति वाजिश्रुतौ त्वद्भ्यः पृथिवी ततोऽग्नि-

रित्यग्नेः पृथ्वीपुत्रत्वमाहुः । अग्ने नक्षत्रमजरमासूर्यं रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः"–इति मन्त्रश्रुतौ सूर्य्यस्याग्निजन्मत्वमुच्यते। "अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्"—इति मन्त्रश्रुतौ त्वग्नेः सूर्यजन्यत्वमाख्यायते । एवमन्यत्रान्यत्रेदमुभयं संभवति । यथा तन्तुभ्यः पट उद्भाव्यते तथा पटादपि तन्तव उद्भाव्यन्ते । यथाऽग्नेरयं दग्धोऽङ्गारो जायते तथा दग्धाङ्गारादप्यग्निर्जायते एवं यथासंभवं लोके द्रष्टव्यम् । श्रूयते चायमर्थो वाजिश्रुतौ— "स एष पिता पुत्रः । यदेषोऽग्निमसृजत, तेनैषोऽग्नेः पिता । यदेतमग्निः समदधात्, तेनैतस्याग्निः पिता । यदेष देवानसृजत, तेनैष देवानां पिता । यदेतं देवाः समदधुः, तेनैतस्य देवाः पितरः। उभयं हैतद् भवति पिता च पुत्रश्च । प्रजापतिश्चाग्निश्च–अग्निश्च प्रजापतिश्च ॥ प्रजापतिश्च देवाश्च, देवाश्च प्रजापतिश्च"—इति । ( ६ । १ । २ ) एवमेवात्र वागदक्षवरुणवाय्वग्नियोगात् पाश्चजन्योऽयमत्रिरुत्पद्यते । अत्रिवंशजप्राचीनवर्हिषः प्रसूतेभ्यो दशप्रचेतोभ्यो योगादपरो दक्षश्चोत्पद्यते ।

अथ प्राणाद्यन्ते यो वायुशरीरो हिरण्यगर्भो ब्रह्मा । एतदुत्पन्नाद्वागादिमयशरीराद् विराजो यः स्वयंभूमनुरुत्पद्यते ततोऽप्येतावत्रिदक्षौ संभवत इति ब्रह्मजन्यत्वमपि नैनयोरपलपितव्यम् । तत्र हिरण्यगर्भप्रजापतेर्वा दक्षप्रजापतेर्वाऽयमत्रिरुत्पद्यताम् । उभयविधस्यापि तस्य पारदर्शकत्वप्रतिबन्धकत्वं सूर्य्यादितैजसकिरणप्रत्यावर्तकत्वं च समानो धर्म्मः । एवं ब्रह्माङ्गुष्ठजन्मा वा प्राचेतसो वाऽयं दक्षः स्यात् । उभयविधस्यापि तस्यादीनि षष्टिविधप्राणविशेषजनकत्वं क्रतुसहचारित्वं च समानो धर्म्मः । तत्रादीनिप्रभृतीनां स्वरूपनिरूपणं ब्रह्मविज्ञानस्य रजोवादे वैशद्येन द्रष्टव्यम् । क्रतुदक्षयोस्तु स्वरूपं वाजिश्रुतौ श्रूयते—"क्रतू दक्षौ ह वा अस्य मित्रावरुणौ । एतत्त्वध्यात्मम् । स यदेव मनसा कामयते—इदं मे स्यादिदं कुर्वीयेति–स एव क्रतुः । अथ यदस्मै तत् समृध्यते स दक्षः । मित्र एव क्रतुः वरुणो दक्षः"—इत्यादि । ( शत० ४ कां० ४ ब्रा० ) अध्यात्ममेवेदं रूपम् । अधिदैवतरूपं रजोवादे व्याख्यातम् ॥ यत्तु दक्षस्य ब्रह्माङ्गुष्ठप्रदेशादुत्पन्नो नत्वयं प्राणविधो दक्ष इति कश्चित् प्रतीयात् स प्रतिवक्तव्यः । ऐतरेयोपनिषद्यद्भ्यः संभूतः कश्चिदाद्यो महापुरुष आम्नायते । सोऽयं सर्वजगद्व्यापीश्वरः प्रतिपद्यते । "तस्मात्परं नापरमस्ति किञ्चित् तस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्"— इति श्रुतेः । एष हि सर्वेषां जन्मदाता प्राणघनः । स एवाग्निमयत्वाद् विराडुच्यते विष्णुश्च । स एव वायु मयत्त्वाद्धिरण्यगर्भ उच्यते ब्रह्मा च । स एवेन्द्रमयत्वात् सर्वज्ञ उच्यते शिवश्च । त्रयो देवा एका मूर्तिः । स वायुना सर्वं जगत् सृजति, अग्निना सर्वं जगत् परिरक्षति । ज्ञानोत्पत्तौ हृदयग्रन्थिमोक्षणात् सर्वं जगदुपसंहरतीति पौराणिकी मर्य्यादा ॥ उत्तरा दिगेतस्य शिरःप्रान्तो, दक्षिणादिक् पादप्रान्तः । पूर्वा दिग् दक्षिणः करप्रान्तः । पश्चिमा दिगुत्तरः करप्रान्तः, इत्येके । पूर्वा शिरः पश्चिमा पादः । दक्षिणा दक्षिणकरः । उत्तरा वामकर इत्येके । प्रधानाङ्गुलीवाचिनाङ्गुष्ठशब्देन करप्रान्तरूपो दिग्विशेषोऽभिप्रेयते । तत्र दक्षिणाद् दक्षस्योत्तरात्तु दक्षपत्न्या जन्मेत्येवान्यत्रापि ब्रह्मशरीरभागादुत्पन्नेष्वर्थेषु पौराणिकी परिभाषा द्रष्टव्या ॥

( २३ ) अत्युत्पत्तिप्रसङ्गे नेयं दक्षोत्पत्तिरिहाख्याता। संप्रति प्रकृतमनुसरामः॥ अयमेवादिपुरुषस्त्रिविधोऽधीयते मनोमयः प्राणमयो वाङ्मयश्च। इत एव पुरुषात् सर्वमिदमुत्पद्यते। तत्रोत्पत्तौ मनोमयो निमित्तकारणम्। प्राणमयोऽसमवायिकारणम् वाङ्मयस्तु समवायिकारणं भवति॥ वाक् चेयं द्विविधा भवति। अमृता मर्त्या च। अमृतातः सर्वे देवाः, मर्त्यातस्तु सर्वाणि भूतान्युत्पद्यन्ते। तत्र पञ्चभूतानामादिभूताकाशपदप्रसिद्धायां वाच्येव दक्षवरुणाद्यमृतयोगादयमत्रिरुत्पद्यते इति बोध्यम्॥

( २४ ) अथोत्पन्नोऽयमत्रिर्यत्र यत्र वस्तुन्यारम्भकविधयोपादीयते तद्वस्तु पारदर्शकत्वाद्विहीयते तत्रायं सूर्य्यरश्मिः प्रत्याहतो भूत्वा तद्वस्तुनो रूपं जनयति तदेव रूपि द्रव्यम् चक्षुषा दृश्यते। तथा तैजसमाप्यं पार्थिवं च। काचादिपार्थिवेऽस्य-मत्रिप्राणोऽत्यल्पमात्र उपादीयते इत्यतस्तत्र सूर्यादितेजोरश्मिःकिञ्चिदेव प्रत्याहन्यते-ऽधिकमात्रया तु स पारं गच्छति। वाय्वाद्यरूपिद्रव्येष्वयमत्रिर्नारम्भकद्रव्यमत एव तेभ्यः सूर्य्यरश्मेरप्रत्याघाताद् रूपं नोत्पद्यते सूर्य्यचन्द्रपृथिव्यादीनि तु यावन्ति घनद्रव्याणि तेष्वयमत्रिः प्राणोऽधिकमात्रया संनिविशते॥

( २५ ) तत एवात्रेः सोमोत्पत्तिर्भवति तथा हि प्रतिसंवत्सरकालमियं पृथ्वी सहस्रांशुं सूर्य्यंपरितः परिक्रामति। तत्रसूर्य्यांशुपरितप्तात् पृथ्वीपिण्डात् प्रतिपलमुद्भवन्नय-मत्रिप्राणः पृथ्वीमनुपरिप्लवते। तेनायमत्रिप्राणः संवत्सरसहस्रांशुभ्यः संयोगात् प्रत्यावृत्ति परितप्यते। परिक्रमणावृत्तित्रयेण तु त्रिः संवत्सरसहांस्रशुपरितापादस्या-त्रिप्राणस्य शरीरं सोमत्वमापद्यते। स सोमभागः परितप्यमानस्यात्रेर्नेत्रतः परिस्रवते। नेत्रशब्दो रश्मिपरः। यावानयमत्रेस्तनुभागः सोमरूपेण परिणमते तावानूर्ध्वरेता इतोऽत्रेः पृथग्भूय सर्वतो दिक्षु व्याप्नुवन् पृथ्वीमन्वेव पुनः संपतति। पृथ्वीमनुसं-पतन्तमेवैतं सोमराशिं हिरण्यगर्भो ब्रह्मा वायुरूपेण चन्द्रकक्षा धरातले निगृह्यैकविं-शतिकृत्वः परिक्रमणोत्तरं क्रमेणैतं सोमराशिं सर्वतः संचिन्वन्नेकं सूर्य्यवत् सहस्रांशुमयं सोमपिण्डं संपादयतिस्म। स एवायं चन्द्रः पृथ्वीं परितः परिक्रममाणो दिवि दृश्यते। यथाऽहनि तोयराशिः सूर्य्यांशुपरितप्त ऊर्ध्वरेताः सन् पृथिव्या उत्क्रम्य दिक्षु व्याप्नुवन् रात्रौ पुनः पृथिव्यामेव संपतितुमारेभे। किन्तु स पृथ्वीमिमां परितश्चन्द्रकक्षोपलक्षितव्योम्नि हिरण्यगर्भे-णोद्भाविते वायुचक्रमये धरातले प्रत्यवरुद्धो नाधस्तात् पृथ्वीतलेऽवतरतिस्म। तत्रैव संचीयमानः स एकविंशतिपरिक्रमणावच्छिन्नेन कालेन पिण्डात्मना परिणतो भूत्वा पृथ्वीं परित एवाद्यापि तेन वायुना प्रणोदितः परिक्रमते। यथाऽऽकाशविकी-र्णांशुः केतुरयं क्रमेण पिण्डो भूत्वा सूर्यो भवति। एवमेव विकीर्णाः सोमांशवः क्रमेण संहत्य चन्द्रपिण्डतामगच्छन्। इति चन्द्रमण्डलोत्पत्तिरहस्यं ब्रह्माण्डादि-पुराणेषु पौराणिका आहुः॥ महाभारतानुशासनपर्वणि दानधर्मेऽत्रिमाहात्म्यप्रसङ्गे अत्रिणैव चन्द्रीभूयान्धकारनिवारणमुच्यते। (म० भा० अ० २६१)–(१५६ अ०)॥

(२६) यत्तु चन्द्रोऽयं कदाचित् सूर्य्य आसीत्। स परिदग्धशान्तोऽन्तर्गर्भाग्निः पृथिव्यभवत्। सर्वथाग्निपरिक्षयणे सा पश्चाच्चन्द्रोऽभवदित्यर्वाचां केषांचिन्मतं ब्रह्मविज्ञानस्याहोरात्रवादे व्याख्यातम्। तन्मतान्तरं भवेदित्यूह्यम्॥

(२७) अस्य चन्द्रस्य यावान् सोमभागः पृथिव्यामोषधिवनस्पतिप्राणिजातेषु संक्रममाणो ह्रसति तावानेव पुनरितोऽत्रेरुद्भूतः सोमश्चन्द्रमण्डले प्रविशन् परिपूरयतीत्यद्यापि स क्रमोऽनुवर्तते। अस्य चन्द्रस्य रथश्चन्द्रकक्षाख्यो वायुमयो मार्गविशेषः सहस्रांशुप्रचयः।

आख्यातं च रथस्वरूपं पुराणेषु। यथा लैङ्गे षट्पञ्चाशदध्याये—

वीथ्याश्रयाणि चरति नक्षत्राणि निशाकरः।
त्रिचक्रोभयतोऽश्वश्च विज्ञेयस्तस्य वै रथः॥ १॥
शतारैश्च त्रिभिश्चक्रैर्युक्तः शुक्लैर्हयोत्तमैः।
दशभिस्त्वक्रशैर्दिव्यैरसङ्गैस्तैर्मनोजवैः॥ २॥
रथेनानेन देवैश्च पितृभिश्चैव गच्छति।
सोमो ह्यम्बुमयैर्गोभिः शुक्लैः शुक्लगभस्तिमान्॥ ३॥
क्रमते शुक्लपक्षादौ भास्करात् परमास्थितः।
देवैः पीतं क्षये सोममाप्याययति नित्यशः॥ ४॥
पीतं पञ्चदशाहं तु रश्मिनैकेन भास्करः।
आपूरयन् सुषुम्णेन भागं भागमनुक्रमात्॥ ५॥
इत्येषा सूर्यवीर्य्येण चन्द्रस्याप्यायिता तनुः।
स पौर्णमास्यां दृश्येत शुक्लः संपूर्णमण्डलः॥ ६॥ इति॥

आदिनाडी मध्यनाडी अन्त्यनाडीत्येवं नक्षत्राणां नाडीत्वेनाभिप्रेतानां चन्द्रकक्षावलम्बभूतानां त्रित्वाच्चान्द्ररथस्य त्रिचक्रतेहाभिप्रेयते इत्येके। आकाशेऽत्युच्चैर्मार्गेण मध्यमार्गेणातिनीचैर्मार्गेण चायं परिभ्रमतीति त्रिचक्रश्चन्द्रकक्षाख्यो रथ इहाभिप्रेत इति परे॥ सोमरसं पातुं सूर्य्यस्थास्त्रयस्त्रिंशत् सोमपाथिनो देवाश्चन्द्रकक्षायां संक्रमन्ते इति चन्द्रचक्रत्रैविध्यान्नवनवतिरश्मयः संपद्यन्ते इत्यतः शतारं चक्रमुच्यते॥ अहोरात्रवृत्तान्यश्वा उच्यन्ते॥ पञ्च दक्षिणतः पञ्चोत्तरतश्च नाडीवृत्ताच्चान्द्राहोरात्रवृत्तानीत्यतो दशाश्वो रथः कल्प्यते॥

तत्रैकविंशतिकृत्वः पृथ्वीपरिक्रमणोत्तरमस्माच्चन्द्रात् कियांश्चित् सोमभागश्चन्द्रात् पृथग्भूय पृथिव्यामोषध्यादिषु संभूय तत्तदर्थोपादानं भवतीत्यप्याहुः॥

(२८) तदित्थमाकाशचारिचन्द्रोत्पत्तिमूलभूतो योऽत्रिप्राणस्तस्य यः प्रथमो द्रष्टासीत् तमेव विद्वांसमत्रिनाम्ना व्यपदिशन्ति। अत्रिप्राणपरिद्रष्टृत्वादत्रिमहर्षिनाम्ना प्रसिद्धस्यास्य विदुषस्तथाविधयशोनामव्यवहारबाहुल्याद्व्यवहृतविस्मृतं यदृच्छानाम न क्वापि स्मर्य्यते।

( २६ ) एतस्यात्रेः पुत्रपरम्पराप्येतेनात्रिशब्देन व्यपदिश्यते । अत्रिप्राणमयब्रह्मवंशधरत्वादत्रिप्राणमयत्वात् । एवमस्यात्रेः शिष्यपरम्परा चात्रेयब्रह्मपरिषदधिष्ठात्री तेनैवात्रिशब्देन व्यपदिश्यते । अत्रिप्राणोपासकत्वादत्रिप्राणाराधनपरीक्षादिप्रयोगप्रधानवृत्तित्वात् । तेनायमत्रिशब्दः कुलपरम्परारूढत्वाज्जातिशब्दः संपद्यते । अतएव जातेरस्त्रीविषयादिति सूत्रे गोत्रं च चरणैः सहेति वैयाकरणाः स्मरन्ति ॥ ततोऽनन्ता अत्रयः काले काले भिन्ना भिन्नाः पुराणेतिहासादिषु प्रसिध्यन्ति । तत्र पुरा देवयुगे तावदात्रेयब्रह्मपरिषदि द्वावत्री पर्य्यायेण लोकशास्तृब्रह्मासनमध्यतिष्ठतम् । भौमोऽत्रिः सांख्यात्रिश्च । आदौ तावद् भूमिष्ठमेवात्रिप्राणं ददर्शेति कृत्वा स भौमोऽत्रिः प्रथमः । स ऋग्वेदस्य पञ्चममण्डलद्रष्टा महर्षिस्तत्र सप्तत्रिंशादीन् कतिपयसूक्तमन्त्रानपश्यत् । एष एव हि भौमोऽत्रिश्चन्द्रस्य पिताऽऽसीत् ।

( ३० ) अथ यः पश्चादाकाशे उत्तरध्रुवसंनिहिते सप्तर्षिमण्डले तुरीयतारकामयमत्रिमपश्यत् स द्वितीयः सांख्योऽत्रिः। सा तारका बृहत्संहितायामप्युच्यते—पूर्वे भागे भगवान्मरीचिरपरे स्थितो वसिष्ठोऽस्मात् । तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च । पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः" ॥ इति । अत्रिप्राणमयं हीदमृक्षमित्यतोऽत्रिरित्युच्यते । स एष आधिदैविकोऽत्रिः ।

( ३१ ) एवमध्यात्ममप्यत्रिप्राणो विनियुज्यते । तथा हि—ऐतरेयब्राह्मणस्य द्वाविंशाध्यायत्रिंशाध्यायोक्तप्रकरणानुसारेणाध्यात्मं चत्वारः सहचराः प्राणाः प्राधान्येनोत्पद्यन्ते नाभानेदिष्ठो बालखिल्या वृषाकपिरेवयामरुच्चेति । स्त्रीयोनौ तावत् पौरुषं रेतो येन सिच्यते स रेतोमयो नाभानेदिष्ठः । तद्रेतो बालखिल्याभिः प्राणैर्विक्रियते । शिरोग्रीवाहस्तवक्षोजठरकटिपादाद्यङ्गप्रत्यङ्गनिर्म्माणाय विभक्तं क्रियते। अथ वृषाकपिरात्मानं कल्पयति । लोमानि त्वङ्मांसमस्थिमज्जा चेति पञ्चधा विहितं करोति । ततोऽस्मिन्नेवयामरुत् काठिन्यं संपाद्य प्रतिष्ठामादधाति । यावत् प्रतिष्ठां न लभते तावत् पराश्रयेणैव तिष्ठतीति गर्भाशयं न त्यजति । अथ प्रतिष्ठां लभमानोऽयमात्मनाऽऽत्मानं धारयितुं समर्थो भूत्वा गर्भाशयाद्बहिर्भवितुं प्रयतते । "एवयामरुतैतवै करोति, तेनेदं सर्वमेनवैकृतमेति यदिदं किञ्च"—इत्यैतरेयश्रुतेः । तथा च रेतः प्राणा आत्मा प्रतिष्ठेति चत्वारोऽर्थाः शरीरारम्भाय भवन्तीति सिद्धम् ॥ तत्र नाभानेदिष्ठं रेतः सोमः । बालखिल्याः प्राणा वायुः । वृषाकपिरात्मा विष्णुः । एवमेवयामरुत्प्रतिष्ठा सोऽत्रिः । पञ्चममण्डलस्थसप्ताशीतितमसूक्तस्यैवयामरुत्प्राणनिरूपकस्य द्रष्टुरेवयामरुतो महर्षेरात्रेयत्वेन स्मर्य्यमाणतया तत्साम्येन प्राणस्याप्येवयामरुत आत्रेयत्वेनैवाभ्युपगन्तव्यात् ॥ प्राणव्यवस्थानुसारेणैव दैवे युगे प्राणिनां विदुषां व्यवस्थाया ब्रह्मणा कृतत्वात् ॥

( ३२ ) इत्थमध्यात्ममधिदैवतं च तत्र तत्र सर्वमत्रिं प्राणमयमन्यः सांख्योऽत्रिरपश्यत् अतएव च तत्र तत्र भूयसोऽत्रेः संख्यानादयमपरोऽत्रिः सांख्य इत्युच्यते । सायणस्तु संख्यपुत्रत्वादेनं सांख्यमाह ब्रह्मणो मानसः पुत्रोऽयमत्रिः संख्यनाम्नः कस्यचिदौरसः पुत्र आसीत् । तं पश्चादयं ब्रह्मा पूर्वात्रिपरिषद्ब्रह्मासने प्रतिष्ठाप्य द्वितीयमत्रिमकरोदिति विज्ञायते ॥ सोऽयं सांख्योऽत्रिर्दशममण्डले त्रिचत्वारिंशाद्

ततमं सूक्तमपश्यत् ॥ ( १४३ ) तत्र चायं पूर्वस्य भौमस्यात्रेर्निगडागारबन्धनाद्यसुरकृतपीडानिवारकत्वेनाश्विनौ देवौ स्तौति । तेनाप्ययमन्योऽत्रिरिति प्रतीयते। एतयोर्भौमसांख्ययोर्द्वयोरेवात्र्योर्देवयुगकालिकत्वं संभावयन्ति । इतरेषामत्रीणां वेदमन्त्रनिर्मातृत्वेन कुत्राप्यस्मरणात्। वस्तुतस्तु वेदमन्त्रनिर्मातृत्वं द्वयोरेवात्र्योरस्तीत्येतन्मात्रं वक्तव्यं न तु देवयुगेऽन्येषामत्रीणां सत्तैव नास्तीत्यास्थेयम्। महाभारतयुद्धपर्य्यन्तं देवयुगप्रतिपत्तेस्ततः पूर्वमपि वेदप्रसिद्धपुरुप्रभृतिराजपितामहस्य नहुषस्य काले कस्यचिदत्रेः स्मर्य्यमाणत्वात् । तथा हि–अत्रिवंशेऽस्मिन्नत्रेः षष्ठो देवनहुषो मेरुगिरिसंनिधाने तपश्चरन्तमत्रिमाजगाम। किन्तु तमत्रिं तत्रापश्यन्नयं देवनहुषस्तस्यात्रेः स्थाने देवनहुषपुरीं निर्म्मापयामास। एतं देवनहुषमेव यवनाः "दिओन्यसिउस" (Dionysius) इत्याचक्षते ॥ तां देवनहुषपुरीं च–"दिओन्यसिवोपोलिस"– ( Dionysiopolis ) इति वदन्तीति केचित् संभावयन्ति । नहुष एव पश्चाद्देवानां राजा भूत्वा देवनहुष इत्युच्यते स्म । अत्रेः पुत्रस्य शांखायनस्य म्लेच्छप्रायतायाः पौराणिकैरुक्तत्वात् तद्वंशधरा एवैते यवनाः स्युः अतएवैषां यवनानामप्ययमत्रिः पूज्यदेवेषु परिगणित आसीदिति केचिदाहुः ॥ एवमयमत्रिः पाञ्चजन्यशब्देनापि विशेषितः श्रूयते—"ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन। मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता "—( १ । ११७ । ३ ) इति ॥ अत्र मन्त्रे पञ्चजनानामभ्यर्हणीयत्वादेवायमत्रिः पाञ्चजन्य इत्युच्यते। ते च पञ्चजना ऋषिपित्रादिपञ्चविधप्राण्यपेक्षया तदत्रिवंशधरा एव पञ्चविधमनुष्यविभागा अधिकं संभाव्यन्ते। पञ्चानामपि तेषामात्रेयाणां श्रुत्यन्तरे स्पष्टं श्रूयमाणत्वात्॥ "यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः। अतः परिवृषणा वा हि यातमथा सोमस्य पिबतं सुतस्य (ऋ० १। १०८।८) इति। पञ्चाप्येते ययातिपुत्रा अत्रेरेव वंशधराः पञ्चानां चन्द्रवंशशाखानां मूलपुरुषाः सन्तीति पञ्चस्वपि तेष्वात्रेयशाखावंशेष्वयमत्रिरभ्यर्हणीयतमः संभवति। तेनायं पाञ्चजन्य इत्युच्यते। तथा चावश्यमेषां पञ्चानामपि समये कस्यचिदत्रेः सत्ता गम्यते। न च मूलपुरुषस्यैवात्रेर्भौमस्य ययातिपुत्रकालपर्य्यन्तस्थितौ काचिद्विनिगमनास्ति। तस्मादत्रिब्रह्मपरिषदि काले कालेऽन्योऽन्योऽत्रिरधिष्ठाता ब्रह्मासीदिति संभावयामः ॥

(३३) अपि च भौमसांख्याभ्यामत्रिभ्यामन्ये खल्वात्रेया बहवो मन्त्रद्रष्टारः श्रूयन्ते ते यथा—

| | | | |
|---|---|---|---|
| १ सदापृणः | ९ श्रुतिवित् | १७ सुतम्भरः | २५ एवयामरुत् |
| २ प्रतिक्षत्रः | १० प्रतिप्रभः | १८ अवस्युः | २६ स्वस्ती |
| ३ ससः | ११ गयः | १९ गातुः | २७ गोपवनः |
| ४ वव्रिः | १२ इषः | २० रातहव्यः | २८ सप्तवध्रिः |
| ५ प्रतिरथः | १३ वसुश्रुतः | २१ यजनः | २९ पौरः |
| ६ प्रतिभानुः | १४ कुमारः | २२ उरुचक्रिः | ३० अर्चनानाः |
| ७ बभ्रुः | १५ गविष्ठिरः | २३ बाहुवृक्तिः | ३१ श्यावाश्वः आर्चनानसः |
| ८ विश्वसामा | १६ धरुणः | २४ सत्यश्रवाः | ३२ अन्धीगुः श्यावाश्विः। |

३३ बुधः सौम्य आत्रेयः ३७ द्युम्नः विश्वचर्षणि
३४ विश्ववारा आत्रेयी ३८ वसूयवः आत्रेयाः
३५ अपाला आत्रेयी ३९ प्रयस्वन्तः आत्रेयाः
३६ मृक्तवाहा द्वितः ४० गौपायना लौपायना वाऽऽत्रेयाश्चत्वारः=बन्धु, सुबन्धु, श्रुतबन्धु विप्रबन्धवः—इति ॥

इत्थमेते चत्वारिंशत् । न चैते सर्वेऽप्येकस्यैवात्रेः पुत्राः समकाला वा संभाव्यन्ते । न च वैषामत्रिवंश्यत्वं विनाऽऽत्रेयत्वं संभवति । तस्माद्देवयुगेऽप्यन्येऽन्ये बहवोऽत्रयः काले काले बभूवुरिति सिद्धम् ॥

( ३४ ) अथ यथैवात्रिशिष्यवंशपरम्परायामुत्तरोत्तराः सर्वा एवात्रिपर्षदधिष्ठातृव्यक्तयोऽत्रिशब्देनैवाख्यायन्ते तथैव सर्वेषां तेषामत्रीणामेका वा दश वा यावत्यो वा भार्य्याः स्युस्ताः सर्वा अप्येकेनैवानसूयाशब्देनाख्यायन्ते । तत्र प्राणरूपस्यात्रेरनसूयाशक्तिमत्वं हेतुः । यत्रात्मन्ययमत्रिप्राणः प्रकृतौ विशिष्यते स पुरुषोऽनसूयावान् भवति । "न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि॥ न हसेच्चान्यदोषांश्च सानसूया प्रकीर्तिता"—इत्यनसूयालक्षणं स्मरन्ति ॥ तथा चानसूयाशक्तिमेवात्रिप्राणं सर्वेऽत्रयः पुरुषाः समाराध्नुवन्निति कृत्वा तेषामपि पत्न्योऽनसूया एवोच्यन्ते ॥ अनसूयाशब्दोऽत्रिभार्य्यावचनोऽत्रिवदेव साधारणो न त्वयं व्यक्तिविशेषरूढो यदृच्छाशब्दः। तेन पञ्चममण्डलद्रष्टुर्भौमस्यात्रेर्दशसु भार्य्यासु भद्राख्यायामनसूयायां सोमोत्पत्तिरासीत् । ते उभे अत्र्यनसूये अन्ये भवतः । ततोऽन्ये अत्र्यनसूये काले काले स्मर्य्यन्ते।तथा हि कदाचिदयमत्रिर्निस्पृहवृत्तिर्धनदारिद्र्यात् परिक्लिष्टयोगक्षेमः पुत्रकलत्रादिपरिवाराणां भोजनादिक्लेशं दृष्ट्वा धनयाचनार्थं पृथोर्वैन्यस्याश्वमेधयज्ञे गन्तुमैच्छत् । किन्तु याचनाकर्मणि दुःखं मन्यमानस्तपसे वनमेव गन्तुं प्रववृत्ते । ततोऽनसूयया संप्रार्थ्यमानः सोऽनिच्छन्नपि तस्या अनुरोधेन पृथोर्यज्ञवाटमाजगाम । धन्यस्त्वमसीश्वरस्त्वमसीत्यादिभिश्चाटुवाक्यैः पृथुराजं भूयसा प्रशशंस च । तच्छ्रुत्वा परिक्रुद्धो महर्षिर्गौतमस्तदानीमत्रये तस्मै पर्य्युवाद। "नैवं त्वं वक्तुमर्हसि। मनुष्यः खल्वयं राजा नेश्वरत्वेनाभिष्टोतुं युज्यते । न ब्राह्मणेन सता चाटुवादः प्रयोक्तव्यो न मिथ्या वक्तव्यम् । इत्येवं भूयोऽत्रिं प्रत्युपालम्भं चक्रे । ततस्तत्र सनत्कुमारो मध्यस्थो भूत्वा विवादं शमयामास ।

"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ १ ॥
यमूर्द्ध्वमिद्धा तिष्ठन्तं सर्वेऽधस्तादुपासते ।
तत्रेश्वरांशो विज्ञेयो नेश्वरादन्य ईड्यते ॥ २ ॥
हस्तपादादिसाम्येऽपि येनांशेन स शास्तिनृन् ।
तेनांशेनेश्वरो राजाऽभ्यर्हणीयतमो नृणाम् ॥ ३ ॥"

इत्थं सनत्कुमारेणात्रिमतस्य न्यायसंगतत्वेन स्थापनात् संतुष्टो राजा पृथुस्तस्मा अत्रये सालङ्कारं दासीसहस्रं स्वर्णदशभारान् अर्बुदमिताः स्वर्णमुद्राश्च प्रददौ। तच्च सर्वमयमत्रिः पुत्रकलत्रादिभ्यो विसृज्य निःस्पृहो भगवानत्रिर्गार्हस्थ्याय विरक्तः स्वयं तपसे वनमेवाजगामेति महाभारते वनपर्वान्तर्गतमार्कण्डेयसमस्यापर्वणि स्मर्य्यते। तत्र तस्यात्रेराङ्गिरसेन गौतमेन समकालिकत्वादङ्गिरसा समकालिकात् प्रथमादत्रेर्भेदः साधु विज्ञायते। तस्मादन्ये इमे पृथुकाले अत्र्यनसूये भवतः॥ अपि चायं वेदमन्त्रद्रष्टा भौमो नाम प्रथमोऽत्रिः पञ्चममण्डले सप्तविंशादिभिः कतिपयसूक्तैरिन्द्रं देवं परिष्टौति। किन्त्वयमन्यः पृथुकालिकोऽत्रिरस्मिन् पृथुयज्ञे यज्ञविघ्नकारित्वेन देवाधमत्वेन च भूयसा देवेन्द्रं परिनिन्दन्नसूयति। भागवते चतुर्थ-स्कन्धोनविंशाध्याये तथोक्तेः। तस्माद्देवेन्द्रं प्रत्येकस्य विरुद्धभावद्वयासंभवादन्ये इमे पृथुकाले अत्र्यनसूये इत्यवगच्छामः॥ पृथुरप्ययमत्रिवंशधर एवासीदित्युक्तं पाद्मभूमौ अष्टाविंशाध्यायं—

"अत्रिवंशसमुत्पन्नः पूर्वमत्रिसमः प्रभुः।
स्रष्टा सर्वस्य धर्मस्य अङ्गो नाम प्रजापतिः॥ १॥
मृत्योः कन्यां स वा अङ्गः सुनीथामुपयेमिवान्।
तस्यामुत्पादयामास वेनं धर्मप्रणाशनम्॥ २॥
मातामहस्य दोषेण वेनः कालात्मजात्मजः।
निजधर्मं परित्यज्य सोऽधर्मनिरतोऽभवत्॥ ३॥
ततो महर्षयः क्रुद्धा वेनंप्रति महाबलाः।
तस्य निग्रहणं कृत्वा ममन्थुस्तस्य विग्रहम्॥ ४॥
सव्योरुमन्थनात्तस्य प्रागभूत् पापपूरुषः।
तस्य वंशधरा एते दृश्यन्ते पापपूरुषाः॥ ५॥
निषादाश्च किराताश्च भिल्ला नाहलकास्तथा।
भ्रमराश्च पुलिन्दाश्च ये चान्ये म्लेच्छजातयः॥ ६॥
गतकल्मषमेवं तं जातं वेनं ततो नृपम्।
ममन्थुर्दक्षिणे पाणौ स्वेद एव ततोऽन्वगात्॥ ७॥
पुनर्ममन्थुस्ते विप्रा दक्षिणं पाणिमेव च।
ततोऽस्मात्पुरुषो जज्ञे शुभलक्षणलक्षितः॥ ८॥
स पृथुर्नाम तं राज्ये तेऽभ्यषिञ्चन्महर्षयः।
तस्याभिषेके विप्रेन्द्राः सर्व एव प्रतस्थिरे॥ ९॥" इत्यादि॥

ननु वामनपुराणस्य सप्तचत्वारिंशेऽध्याये पृथुरयं मरीचिवंशज उच्यते नात्रिवंशजः। तथा हि—

"एकार्णवे जगत्यस्मिन्नष्टे स्थावरजङ्गमे।
विष्णोर्नाभिसमुद्भूतः सर्वलोकपितामहः॥ १॥

तस्मान्मरीचिरभवन्मरीचेः कश्यपः सुतः ।
कश्यपादभवद् भास्वांस्तस्मान्मनुरजायत ॥ २ ॥
मनोस्तु क्षुवतः पुत्र उत्पन्नो मुखसंभवः ।
पृथिव्याश्चतुरन्ताया राजा धर्मस्य रक्षिता ॥ ३ ॥
तस्य पत्नी बभूवाथ भया नाम भयावहा ।
मृत्योः सकाशादुत्पन्ना कालस्य दुहिता तदा ॥ ४ ॥
तस्यां समभवद् वेनो दुरात्मा वेदनिन्दकः ।
स मातामहदोषेण वेनः कालात्मजात्मजः ॥ ५ ॥ इत्यादि पूर्ववत् ।

तथा चेदचाक्षुपुत्रोयं पृथोः पिता वेनो नत्वङ्गपुत्र इति चेन्न ॥ वामनपुराणलेखकस्य पौराणिकस्यैतस्मिन् वेनजन्मनि भ्रान्ततयोपेक्षणीयत्वात् ।

"पितृकन्या सुनीथा तु वेनमङ्गादजीजनद्" ( ५ अ. ) इति मात्स्यवदितरसर्वपुराणमहाभारतादिष्वङ्गपुत्रतयैवास्य वेनस्य सुप्रसिद्धतया बहु संवाददाङ्गित्वेनैव परिग्रहीतुमौचित्यात् । तत्राङ्गस्यात्रिवंशोत्पन्नत्वं ब्रुवता साक्षादत्रिपुत्रत्वं निराक्रियते इति बहूत्तरकालिकत्वमस्य पृथोर्निष्क्रष्यते । अतस्तत्कालिकयोरत्र्यनसूययोः प्रथमाभ्यामत्र्यनुसूयाभ्यां भिन्नत्वमध्यवसीयते ॥ एवमितोऽप्यर्वाक् काले कतिपयेऽत्रयोऽनसूयाश्च स्मर्य्यन्ते । यथा रामचन्द्रवनवासकालेऽत्र्याश्रमोपस्थिताया सीतायाः केशसंवरणमनसूयया कृतमिति रामायणादौ ( आरण्ये २ सर्गे ) स्मर्य्यते । रामश्चात्रिप्रभृतिभिः सहितो गोदावरीतटमाजगामेति अग्निपुराणे ( ७ । २ ) उक्तम् । तेन तत्कालेऽप्यत्र्यनुसूययोः सत्ता गम्यते । नचैतयोरेकयोरेव दम्पत्योर्देवलोके दण्डकारण्ये च सत्ता संभाव्यते । देशकालयोरतिविप्रकृष्टत्वात् । तस्मादन्ये अन्ये अत्र्यनुसूये काले काले यत्र तत्र बभूवतुरिति प्रतिपत्तव्यम् ॥ अपि च तिस्रोऽनसूयाः स्मरन्ति पौराणिकाः—दक्षकन्यां कर्दमकन्यां कर्दमश्वश्रूं चेति । तथा हि । "ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे" इति प्रतिज्ञायाग्नेये—"सोमं दुर्वाससं दत्तमनसूयाऽप्यजीजनद्" इति दक्षकन्यामाह । "याः कर्दमसुताः प्रोक्ता" इति प्रतिज्ञाय भागवते—"अत्रेः पत्न्यनसूया त्रीन्जज्ञे सुयशसः सुतान्" इति कर्दमकन्यामाह (अथ ब्रह्माण्डपूर्वभागैकादशाध्याये तु ततोऽन्यामेव षडपत्यवर्ती कर्दमश्वश्रूमनसूयामन्वाचष्टे—"अनसूया विजज्ञे वै पञ्चात्रेयानकल्मषान् । कन्यां चैव श्रुतिं नाम माता शंखपदस्य सा । कर्दमस्य तु पत्नी सा पौलहस्य प्रजापतेः" इति ॥ पुलहपुत्रस्य कर्दमस्य पुत्रोयं शंखपदो वेनपुत्रस्यातिप्रसिद्धस्य पृथुमहाराजस्य दक्षिणदिक्पाल आसीदिति वक्ष्यते ॥ अस्यामनसूयायामुत्पन्नाः पञ्चात्रेयास्तु—सत्यनेत्रो हव्य आपोमूर्तिः शनैश्चरः सोमश्चेत्याम्नायन्ते । तत्र सत्यनेत्रादिसाहचर्य्यादयं पञ्चमः सोमोऽपि दुर्वासोदत्तात्रेयभ्रातृकात् सोमाद्भिद्यते इति सुनिभृतं प्रत्येतव्यम् ॥

(३५ अन्यस्यामन्यस्यां चानसूयायामन्योऽन्यः पुत्रोऽत्रेरुदभवत् । तत्रात्र्यनुसूयाशब्दसामान्यादत्रिपुत्रविशेषाणामुत्पत्तिविषये बहवः खल्वैतिहासिका भ्रान्ता बभूवुः । यथा विष्णु ( १ । १० । ८ ) पुराणाद्यनुसारेण सोमदत्तदुर्वाससामनसूयाग-

भंजत्वे संभवत्यपि केचित्तावत् कर्दममुनिकन्यायामनसूयायामेषां त्रयाणामुत्पत्तिमाहुः। अन्ये पुनर्भद्राश्वराजकन्यायां भद्राख्यायामनसूयायां सोमोत्पत्तिमन्यस्यां च भद्राश्वकन्यायां दत्ताद्युत्पत्तिमाहुः। तदेतदसमञ्जसं भ्रान्तं च। भद्राश्वदुहितरस्तावदिमाः कस्यात्रेः पत्न्य आसन् कस्य वाऽत्रेः कर्दममुनिकन्या भार्य्यासीदिति विशिष्य न ज्ञायते। तथापि दत्तदुर्वाससः प्रभृतयोऽत्रिपुत्रा उत्तरोत्तरकालानामत्रीणां पृथक् पृथक् पुत्राः स्युरिति संभावयामः। महाभारतयुद्धसमकालानां दुर्वासःप्रभृतीनामतिपुरातनचन्द्रसहोदरत्वाभिमानस्यानवक्लृप्तत्वात्। अथवास्तु सोमभ्रातृभ्यां दत्तदुर्वासोभ्यां भारताद्युत्तरकालिकयोर्दत्तदुर्वाससोरन्यत्वमिति सुधीभिरूह्यम्। सोमस्त्वयमाद्यस्यैवात्रेः पुत्र इति युक्तमुत्पश्यामः। सोमाय लोकपालत्वाधिकारप्रदानस्य प्रधानब्रह्माधीनतया प्रधानब्रह्मपुत्रादत्रेरेव तदुत्पत्तेरौचित्यात्॥

३६—अथ यथा भौमस्यात्रेरयं सोमः पुत्र आसीत् तथैव सांख्यस्यात्रेः शांखायनो नाम पुत्रो बभूव। शांखायन इति यदृच्छाशब्दो नत्वपत्यप्रत्ययान्तः। अत्रेः प्रथमपुत्रत्वेन पुराणे स्मरणात्। सोऽयमतिसुन्दरो बलिष्ठोऽप्युग्रस्वभावोऽत्यन्तमधार्मिकश्चासीत्। स गिरिगह्वरेषु निवसन्नभक्ष्यमपि मांसं भक्षयति स्म। तद्भ्रातापि तथैवासभ्यो भूत्वा वने वने विचरति स्म। तयोस्तथाचरणात् परिक्रुद्धोऽयमत्रिः परिभर्त्सयंस्ताभ्यामाचारविचाराद्यर्थं बहूपदिदेश। यत्र तत्र वने विचरतोस्तयोर्निवासार्थमनेकस्थानान्यत्रिनाम्नैव कल्पयित्वा स्वयं सोऽत्रिः सिन्धुदेशे देवनिकायगिरौ गत्वा तत्रैव न्युवास। शांखायनतद्भ्रात्रोर्वंशधरा यवना बभूवुरिति केचिदाहुः॥

३७—अन्यस्यात्रेः पुत्राणां म्लेच्छप्रायत्वेऽप्याद्यस्यात्रेः पुत्रस्य सोमस्यायं प्रकाशमयः पवित्रो वंश आदेवयुगादिदानीं यावदविच्छिन्नः प्रवर्तमानो ब्रह्मणा प्रवर्तितं वैदिकमेव धर्म्मं परिपालयन्नद्यापि दृश्यते। सोऽयं पवित्रो वंश आख्यायते॥

॥ इत्यत्रिचरितं समाप्तम्॥

## ३—चन्द्रः

ब्राह्मस्य सप्तमे पाद्मसृष्टिद्वादशे विष्णुचतुर्थांशस्य षष्ठे। भागवतनवमस्य चतुर्दशे अग्नेस्त्रयोदशे चतुःसप्तत्यधिकद्विशततमे च। वाराहस्य द्वात्रिंशपञ्चत्रिंशयोः। मात्स्यस्य त्रयोविंशे चन्द्रो व्याख्यातः॥

उक्तं पूर्वं चन्द्रोऽयमत्रेः पुत्र आसीदिति। तत्र यस्तावत् प्राणविधोऽत्रिर्व्याख्यातः तत्सम्बन्धेनेवायं गगनचरश्चन्द्रपिण्डः पारदर्शकताप्रतिबन्धात् स्वस्मिन्नागतान् सूर्य्यांशून् प्रत्यावर्तयतीति कृत्वा प्रकाशात्मा चन्द्रः संभवति ततः स चन्द्रोऽत्रिपुत्र इति शक्यते व्यपदेष्टुम्। एतदेवाधिदैविकं रहस्यमनुसंधायाधिभूतमप्यर्थः साम्यादुन्नीयते। यः खलु तादृशात्रिप्राणद्रष्टृत्वयशसा हेतुना तदत्रिशब्देनैवात्रलोके प्रसिद्ध आसीत् तस्यात्रिमहर्षेरौरसपुत्रेष्वनेकेष्वपि यः सर्वप्रथम आसीत् तमयं पितामहो ब्रह्मा स्नेहविशेषाद्वा तद्गतसौन्दर्य्यादिगुणविशेषानुग्रहाद्वा तेनैव

चन्द्रनाम्ना प्रख्यापयतिस्म । बाल्यादेव ब्रह्मानुग्रहभाजनं स चन्द्रः क्रमेण परामुन्नतिं प्रापत् ॥ ० ॥

॥ तस्य सोम इति नामान्तरम् ॥ ० ॥

अस्य च सोमस्य पञ्चविधं जन्माख्यायते पुराणेषु । समुद्रमथनात् सोमो जज्ञे इत्येकम् । अत्रेस्तपश्चरतो नेत्रप्रस्नुतजलात् सोमो जज्ञे इति द्वितीयम् । दिगङ्गनारजस्यत्रिवीर्य्यात् सोमो जज्ञे इति तृतीयम् । कर्दममुनिकन्यायां दक्षकन्यायां वानसूयायां ब्रह्मपुत्रादत्रेरौरसः पुत्रः सोमो जज्ञे इति चतुर्थम् । भद्राश्वराजकन्यायां भद्रायामत्रेरौरसः सोमो जज्ञे—इति पञ्चमम् ॥

तत्र समुद्रमथनादुक्तं महाभारतादिपर्वण्यष्टादशाध्याये ॥

"देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ।
अमृतार्थे पुरा ब्रह्मंस्तथैवासुरदानवाः ॥ १ ॥
सर्वौषधीः समावाप्य सर्वरत्नानि चैव ह ।
देवैरसुरसंघैश्च मथितः कलशोदधिः ॥ २ ॥
ततो नानाविधास्तत्र सुस्रुवुः सागराम्भसि ।
महाद्रुमाणां निर्य्यासा बहवश्चौषधीरसाः ॥ ३ ॥
ततस्तस्य समुद्रस्य तज्जातमुदकं पयः ।
रसोत्तमविमिश्रं च ततः क्षीरादभूद् घृतम् ॥ ४ ॥
चिरारब्धमिदं चापि सागरस्यापि मन्थनम् ।
तत्पयः सहिता भूयश्चक्रिरे भृशमाकुलम् ॥ ५ ॥
ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् ।
प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः ॥ ६ ॥ इति ॥

एवमेवोक्तम् वाराहे पञ्चत्रिंशाध्याये :—

"तानुवाच तदा देवो मथ्यतां कलशोदधिः ।
औषध्यः सर्वतो देवाः प्रक्षिप्याशु सुसंयतैः ॥ १ ॥
ते सर्वे तत्र सहिता ममन्थुर्वरुणालयम् ।
तस्मिन् सुमथिते जातः पुनः सोमो महीपते ॥ २ ॥
योसौ क्षेत्रज्ञसंज्ञो वै देहेस्मिन् पुरुषः परः ।
स एव सोमो मन्तव्यो देहिनां जीवसंज्ञकः ॥ ३ ॥
परोक्षे यां स मूर्तिं तु पृथक् सौम्यां प्रवेदिवान् ।
तामेव देवमनुजाः षोडशेमाश्च देवताः ॥ ४ ॥
उपजीवन्ति वृक्षाश्च तथैवौषधयः प्रभुम् ।
रुद्रस्तमेव सकलं दधार शिरसा तदा ॥ ५ ॥
तदात्मिका भवन्त्यापो विश्वमूर्तिरसौ स्मृतः ।
तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीं तिथिं प्रभुः ॥ ६ ॥

तस्यामुपोषयेद्राजंस्समर्थं प्रतिपादयेत् ।
स चान्नाहारश्च भवेत् तस्य ज्ञानं प्रयच्छति ॥ ७ ॥
कान्तिं पुष्टिं च राजेन्द्र धनं धान्यं च केवलम् ॥ इति ॥

अथ मात्स्ये त्रयोविंशाध्यायेऽत्रिनेत्रादुत्पत्तिरुच्यते :—

आदिष्टो ब्रह्मणा पूर्वमत्रिः सर्गविधौ पुरा ।
अनुत्तमं नाम तपः सृष्ट्यर्थं तप्तवान् प्रभुः ॥ १ ॥
यस्मादुमापतिः सार्द्धमुमया तमधिष्ठितः ।
तं दृष्ट्वा चाष्टमांशेन तस्मात्सोमोऽभवच्छिशुः ॥ २ ॥
अधः सुस्राव नेत्राभ्यां धाम तच्चाम्बुसंभवम् ।
दीपयद्विश्वमखिलं ज्योत्स्नया सचराचरम् ॥ ३ ॥ इति ॥

अथ मार्कण्डेये षोडशाध्याये—स्वधर्मपत्नीमृतुस्नातामनसूयां पश्यतोऽत्रेर्मनोविकारात् प्रस्खलितस्य वीर्य्यस्य वायुनोत्थापितस्य दश दिग्व्यापि सोमात्मकरजोयोगात् सोमोत्पत्तिमाहुः—

"ततः काले बहुतिथे द्वितीयो ब्रह्मणः सुतः ।
स्वभार्य्यां भगवानत्रिरनसूयामपश्यत् ॥ १ ॥
ऋतुस्नातां सुचार्वङ्गीं लोभनीयतमाकृतिम् ।
सकामो मनसा भेजे स मुनिस्तामनिन्दिताम् ॥ २ ॥
तस्याभिपश्यतस्तां तु विकारो योऽभ्यजायत ।
तमपावाह पवनस्तिर्यगूर्ध्वं च वेगवान् ॥ ३ ॥
ब्रह्मरूपं च शुक्राभं पतमानं समन्ततः ।
सोमरूपं रजोरूपं दिशस्तं जगृहुर्दश ॥ ४ ॥
स सोमो मानसो जज्ञे तस्यामत्रेः प्रजापतेः ।
पुत्रः समस्तसत्त्वानामायुराधार एव च ॥ ५ ॥
विष्णुरेवावतीर्णोऽसौ द्वितीयोऽत्रेः सुतोऽभवत् ।
दत्तात्रेय इति ख्यातः सोऽनसूयास्तनं पपौ ॥ ६ ॥
दुर्वासास्तमसा युक्तो रुद्रांशः सोऽभ्यजायत ।
सप्ताहात् प्रच्युतो मातुरुदरात् कुपितो यतः ॥ ७ ॥

॥ इति ॥

अथवा नेदं वीर्य्यस्खलनमधस्ताद् वासस्यभवत् । किन्तूर्ध्वरेतसो महर्षेः शरीरे मनोविकाराद्विक्षुब्धं रेत ऊर्ध्वमाचक्रमे । तद्रेतः सोमत्वं प्राप्य नेत्राभ्यां वारि भूत्वा बहिरभवत् । तद्वायुनाऽन्तरिक्षे नीतं दिक्सोमसंपर्कात् चन्द्रमजनयत् ॥ तथा चोक्तं ब्राह्मे सप्तमाध्याये :—

"पिता सोमस्य भो विप्रा जज्ञेऽत्रिर्भगवानृषिः ।
ब्रह्मणो मानसात्पूर्वं प्रजासर्गं विधित्सतः ॥ १ ॥
ऊर्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत् ।
नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः ॥ २ ॥
तं गर्भं विधिना दिष्टा दश देव्यो दधुस्तदा ।
ततस्ताभिः सहैवाशु निपपात वसुन्धराम् ॥ ३ ॥ इत्यादि ( ७ अ. )

अथ भागवते चतुर्थस्कन्धे प्रथमाध्याये कर्दमपुत्र्यामनसूयायां सोमोत्पत्तिस्समर्थ्यते—

याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः ।
तासां प्रसूतिप्रसवं प्रोच्यमानं निबोध मे ॥ १ ॥
पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा ।
कश्यपं पूर्णिमानं च ययोरापूरितं जगत् ॥ २ ॥
अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान् ।
दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान् ॥ ३ ॥ इति ॥

अथाग्नेयविंशाध्याये दक्षपुत्र्यामनसूयायां सोमोत्पत्तिमाहुः —

ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे ।
देवौ धाताविधातारौ भृगोः ख्यातिरसूयत ॥ १ ॥
पौर्णमासश्च संभूत्यां मरीचेरभवत्सुतः ।
स्मृत्यामङ्गिरसः पुत्राः सिनीवाली कुहूस्तथा ॥ २ ॥
राका चानुमतिश्चात्रेरनसूयाऽप्यजीजनत् ।
सोमं दुर्वाससं पुत्रं दत्तात्रेयं च योगिनम् ॥ ३ ॥
प्रीत्यां पुलस्त्यभार्य्यायां दत्तोलिस्तत्सुतोभवत् ।
क्षमायां पुलहाज्जाताः सहिष्णुकर्दमादिकाः ॥ ४ ॥
संतत्यां च क्रतोरासन् बालखिल्या महौजसः ।
अंगुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्रिणः ॥ ५ ॥
ऊर्जायां च वसिष्ठात्तु राजा गात्रोर्ध्वबाहुकः ।"

॥ इति ॥

अथ ब्रह्माण्डोपोद्घातेऽष्टमाध्याये भद्राश्वराजकन्यायां भद्रायामस्योत्पत्तिरुक्ता—
"भद्रायां जनयामास सोमं पुत्रं यशस्विनम् ।"

## तत्रेत्थमनेकधोत्पत्तिरेकस्य नावकल्पते इति चेत्—

अत्रेदमुच्यते—सर्वजगद्व्यापकोऽयं सोमोऽनेकधा दृश्यते लोके आध्यात्मिकश्चाधिदैविकश्चाधिभौतिकश्च विग्रहवान् जीवश्चेति तत्राध्यात्मिकोऽयं नेहाख्यायते । आधिदैविकस्य तु गगनचरस्य भास्वरचन्द्रस्यैयमत्रिनेत्रप्रस्रवणादुत्पत्तिः प्रपञ्चिता तत्रायमत्रिः प्राणविध एवेति सिद्धान्तः प्रागेवोपपादितः ॥ ० ॥

एवं मार्कण्डेयपुराणोक्तेयमत्रिरेतसोऽधःस्खलितादुत्पत्तिः, यद्वा ब्राह्मोक्तेयमत्रिरेतसो नेत्रमार्गेण स्खलितादुत्पत्तिरित्युभयविधाप्याधिदैविकस्यैवचन्द्रस्य भाव्या। सर्वतत्त्वायुराधारत्वप्रतिज्ञानात् ॥

"तस्य यत् स्रावितं तेजः पृथिवीं समपद्यत् ।
ओषध्यस्ताः समुद्भूता याभिः संधार्य्यते जगत् ॥"

इत्युत्तरग्रन्थेनाकाशतः पृथिव्यां सोमरसप्रस्रवणप्रतिज्ञानाच्च ॥ तथा चैतस्य सोमस्याधिदैविकत्त्वे सिद्धे तदुत्पादकात्रिरेतोपि प्राणविधमेव संभाव्यते नतु नरविधस्यात्रेरिदं रेतः स्यात् । अत्यल्पमात्रेण पुंरेतसा महामण्डलस्य चन्द्रस्योत्पत्तेरसामञ्जस्यात् ॥ यत्त्वनसूयां पश्यतोऽत्रेः कामाद्रेतः स्खलितमिति नरविधत्वे प्रमाणमाहुस्तदसत्॥ खचरस्याधिदैविकस्य सोमस्य चेतनस्य तु भूमिष्ठस्य सोमस्योत्पत्तिप्रकारभेदे प्राचीनेतिहासवर्णिते भ्रान्त्या तयोरेकत्वं पश्यतां ब्राह्ममार्कण्डेयादिलेखकानामर्वाचीनानां स्वकल्पितेयं भिन्नप्रकारयोः कथंचिदभेदसाधनाय सामञ्जस्यकरणयुक्तिः प्रतिभाति । वस्तुतस्तु नानसूयां पश्यतो नरविधस्यात्रेरधः प्रस्खलिताद्वा नेत्रतः स्खलिताद्वा वीर्य्यादयं खचरश्चन्द्रो जज्ञे इत्यर्थे किञ्चित्सत्यमस्ति । तस्मान्नरविधस्यात्रे रेतसाऽनसूयागर्भे नरविधश्चन्द्रो जज्ञे इत्यन्योऽर्थः । अत्रिनेत्रप्रस्नुतरसादिग्धारितादधः पतितात् खचरश्चन्द्रो जज्ञे इत्यन्योऽर्थः इत्येवं पार्थक्येनैवार्थो नेयः ॥

एतस्यैवाधिदैविकस्य शुक्लादिवैशाखे राधायां वर्द्धमानस्य पश्चात् क्रमणे क्षयं गच्छतो रोहिण्यां विलुप्यमानस्य रोहिणीनाक्षत्रिकरसविशिष्टस्येह पृथिव्यां सर्वास्वोषधीषु तस्मिन्नहनि भूयसा संसृज्यमानस्य ताभ्य एवोद्धृत्य संग्रहणाय कलशोदधौ सर्वौषधिमूलानि प्रक्षिप्य कदाचिद्देवा विद्वांसो मन्थनप्रक्रियाभिज्ञा यन्त्रविशेषसाहाय्येन ममन्थुः । अपरे तु शुक्लादिकार्तिके रोहिण्यां वर्द्धमानस्य पश्चात् क्रमेण ज्येष्ठायां नष्टस्य सोमस्यौषधीभ्य उद्धारमभिप्रयन्ति ॥ तथा च दधिमन्थनान्नवनीतप्रादुर्भाववत्तत्र सर्वौषधीमूलमन्थनाद् रोहिणीरसविशिष्टः सोमः प्रादुरभूत् । सर्वौषधिमूलोद्भूतत्वाद्विश्वमूर्तिरसौ सोमः सोमात्मकापोमयः संगृहीतोभूत् । एष एव सामो वायुरूपिणा रुद्रेण शिरसा धृतो नीरूपं वायुं गतो वायुमयो भूत्वा सर्वौषधिवनस्पतिपोषको भवति । देहिनीं च देहे क्षेत्रज्ञः षोडशी नामात्मा संपद्यते । आपोमयं तु सोमरसं पौर्णमास्यामुपोष्य द्वितीयदिने प्रतिपद्यन्नसहकारेण यद्याहरति, तदैतत्सोमरसप्रभावादस्य विशिष्टं ज्ञानं कान्तिः शरीरपुष्टिर्बुद्धिविशेषयोगाद्धनधान्यादयश्च संपद्यन्ते"–इति वाराहपुराणीयसोमोत्पत्तिरहस्यं विज्ञेयम् । नैतेन देहिनः कस्यचिज्जीवस्योत्पत्तिरभिप्रेयते इति सुनिभृतं प्रत्येतव्यम् ॥

देहिनस्तु नरविधस्य सोमस्यानसूयायामत्रेरुत्पत्तिरिति सिद्धान्तः । किन्तु गोत्रवचनत्वादत्रिरिति जातिशब्दो न व्यक्तिशब्द इत्यत्रीणां बहुत्वात् सर्वेषां भार्यास्वयमनसूयाशब्दः साधारणो भवति । तेन कर्दममुनिकन्यायां कस्यांचिदत्रिभार्य्यायामनसूयाशब्दव्यपदेशेऽपि ततोऽतिप्राचीनायामादिब्रह्मसमकालायां भद्राश्वराजकन्यायां भद्राख्यायामेवानसूयायां सोमो जज्ञे इत्येवोचितं प्रतिभाति ॥

अथवा त्रिविधः सोम इति ब्रूमः–दक्षकन्यायामनसूयायामाध्यात्मिकः सोमः सोन्यः। भद्राश्वकन्यायामनसूयायां प्राचीनात्रेरुत्पन्नः सोऽन्यः। कर्दमकन्यायामनसूयायामर्वाचीनात्रेरुत्पन्नः सोमोऽन्यः। तत्र क्रतूदक्षौ ह वा अस्य मित्रावरुणौ। एतन्न्वध्यात्मम्। स यदेव मनसा कामयते-इदं मे स्यादिदं कुर्वीयेति स एव क्रतुः। अथ यदस्मै तत्समृध्यते स दक्षः। "इति मैत्रावरुणग्रहयागीयवाजिश्रुतेः (शत. ४।४ब्रा) प्रसिद्धस्याध्यात्मिकस्य दक्षस्य प्रसूत्यां चतुर्विंशति धर्मा इष्यन्ते तदुक्तम्–"प्रसूत्यां जज्ञिरे दक्षाच्चतुर्विंशतिकन्यकाः। श्रद्धा लक्ष्मीर्धृतिस्तुष्टिर्मेधा पुष्टिस्तथा क्रिया ॥ १ ॥ बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदशी ॥ पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीरिमाः ॥२॥ ख्यातिः स्मृतिश्चानसूया प्रीतिः क्षान्तिश्च संततिः। ऊर्जा स्वाहा स्वधा तद्वत् संभूतिश्च सती तथा ॥३॥ एकादशर्षयस्त्वेताः ख्यात्याद्या जगृहुः पृथक्। भृग्वङ्गिरोऽत्रयस्तद्वत् पुलस्त्यः पुलहः क्रतुः। वसिष्ठोऽग्निश्च पितरो मरीचिश्च भवस्तथा"–इति। एषामपि पुत्रपौत्रा विष्णौ प्रथमांशे सप्तमाध्याये द्रष्टव्याः। क्षेत्रज्ञप्रकृतिश्चान्यः सोमोध्यात्मं महान्नाम स्मर्यते पुराणेषु। आध्यात्मिकत्वाविशेषेऽप्येतौ सोमौ परस्परतो भिद्येते। अथ यावेतौ भद्राश्वकर्दमयोर्दौहित्रौ मानुषौ भवतः। तौ च भिद्येते। अत एवास्य द्वितीयसोमस्य कन्या भद्रा नाम्नी स्मर्य्यते। अन्यथा प्राचीनात्रेभार्य्यासु दशसु भद्राश्वपुत्रीष्वेकस्या भद्रानाम्न्याः सोमजननीत्वात् तत्सोमदुहितुरपि भद्रानामकरणमसमञ्जसं स्यात्। सोमदुहिता चेयं भद्रा वृहस्पतिभ्रातुरुतथ्यस्य भार्य्यासीत् तामेकदा वरुणोऽपजहारेति कथानकं भारतानुशासनपर्वणि दानधर्मे पवनार्जुनसंवादे स्मर्य्यते :—

"भद्रा सोमस्य दुहिता रूपेण परमा मता।
यस्यास्तुल्यं पतिं सोम उतथ्यं समपश्यत ॥ १ ॥
तत आहूय सोतथ्यं ददावत्रिर्यशस्विनीम्।
भार्य्यार्थे स तु जग्राह विधिवद् भूरिदक्षिणः ॥ २ ॥
तां त्वकामयत श्रीमान् वरुणः पूर्वमेव ह।
स चागम्य वनप्रस्थं यमुनायां जहार ताम् ॥ ३ ॥
जलेश्वरस्तु हृत्वा तामनयत् स्वपुरं प्रति।
परमाद्भुतसंकाशं षट्सहस्रशतह्रदम् ॥ ४ ॥
न हि रम्यतरं किञ्चित् तस्मादन्यत्पुरोत्तमम्।
प्रासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम् ॥ ५ ॥
अथाख्यातमुतथ्याय ततः पत्न्यवमर्दनम्।
तच्छ्रुत्वा नारदात् सर्वमुतथ्यो नारदं तदा ॥ ६ ॥
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः।
मद्वाक्यान्मुञ्च मे भार्य्यां कस्मात् तां हृतवानसि ॥ ७ ॥
लोकपालोसि लोकानां न लोकस्य विलुम्पकः।
सोमेन दत्ता मे भार्य्या त्वया चापहृताद्य वै ॥ ८ ॥

नारदात् तद्वचः श्रुत्वा ततस्तं वरुणोऽब्रवीत् ।
ममैषा सुप्रिया भीरुर्नैनामुत्स्रष्टुमुत्सहे ॥ ९ ॥
इत्युक्तो वरुणेनाथ नारदः प्राप्य तं मुनिम् ।
उतथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव ॥ १० ॥
गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने ।
न प्रयच्छति ते भार्य्यां यत्ते कार्य्यं कुरुष्व तत् ॥ ११ ॥
नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः ।
अपिवत् तेजसा वारि विष्टभ्य स महातपाः ॥ १२ ॥
अपि क्रुद्धोऽब्रवीद्भूमिमुतथ्यो ब्राह्मणोत्तमः ।
दर्शयस्व स्थलं भद्रे षट्सहस्रशतं ह्रदम् ॥ १३ ॥
ततस्तदीरणं जातं समुद्रश्चावसर्पितः ।
तस्माद्देशान्नदीं चापि प्रोवाचासौ द्विजोत्तमः ॥ १४ ॥
अदृश्यागच्छ भीरु त्वं सरस्वति मरुत् प्रति ।
अपुण्य एष भवतु देशस्त्यक्तस्त्वया शुभे ॥ १५ ॥
तस्मिन् संशोषिते देशे भद्रामादाय वारिपः ।
अददाच्छरणं गत्वा भार्य्यामाङ्गिरसाय ताम् ॥ १६ ॥
प्रतिगृह्य तु तां भार्य्यामुतथ्यः सुमनाभवत् ।
मुमोच च जगद्दुःखाद्वरुणं चैव हैहय ॥ १७ ॥ इति ( १५५ )

अत्र पाठेऽत्र्यङ्गिरःशब्दौ सोमोतथ्याभिप्रायेणोक्तौ तयोः शब्दयोस्तद्वंशधरमात्रसाधारणत्वं दर्शयतः ॥ यमुनाकूले वनप्रस्थनाम्नि ग्रामे स उतथ्यो निवसतिस्मेति गम्यते । एतद्वनप्रस्थमेव संप्रतिकाले 'पानीपथ' नाम्ना प्रसिद्धमस्तीति सभावयामः । वरुणपुरं तु वनप्रस्थादस्माद्दक्षिणपश्चिमतः सार्द्धाष्टाविंशत्यक्षांशतुल्ये पादोनचतुर्थांशदेशीयपश्चिमदेशान्तरप्रमिते देशे संभाव्यते । यद्यप्यस्य वरुणस्य मुख्या राजधानी 'वाह्लीक' नगराद्दक्षिणतः समुद्रान्तर्गते क्षुद्रद्वीपविशेषे क्वचिदासीत् तथापि यथेदानीं कश्मीरमहाराजस्य श्रीनगरं जम्बूनगरं चेति राजधानीद्वयमुपलभ्यते एवं पुरा देवयुगे देवानामसुराणां च प्रायेण नगरत्रयं नगरद्वयं वा निवासस्थानं बहूनि च विहारस्थानानि भवन्तिस्मेति भूयसा वेदपुराणयोर्नियमदर्शनादस्यापि वरुणस्य सिन्धुनदात् प्रतीच्यां प्राच्यां चोभयतो दिशि स्थानद्वयमुपपद्यते । एतद्वरुणपुरसंबन्धेनैव भरतवर्षाद्बहिर्धा दक्षिणपश्चिमतः समुद्रपारस्थानां सुदूरवर्तिनामप्यसुराणामिह सिन्धोः पूर्वदेशे भरतखण्डे यातायातप्रवृत्तिरासीत् । या चेदानीं सिन्धुशतद्रूसंगमस्थानात् पूर्वतो महती मरुस्थली दृश्यते तत्र पुरा युगे पूर्णोर्वराभूमिरासीद्बहूनि चान्नधनसमृद्धानि वरुणपालितानि जनपदनगराण्यासन् । षट्सहस्रशतह्रदो जलाशयप्रायश्चायमतिरमणीयो देश आसीत् किन्तु कर्दमदौहित्रसोमसमसमय एवोतथ्यमुनितपःप्रभावाद्वा प्रकृतिविपर्य्ययाद्वा जलानां निःशेषपरिशोषणात् षट्सहस्रशतह्रदानां विध्वंसादयमित्थमीरिणप्रान्तोऽभूत् । समुद्रश्चैतत्स्थानाद्दक्षिणतोऽपसृतोऽभूत । बालुकास्तूपौघप्रवर्षणाच्च सर-

स्वत्यादयः कतिपयनद्योऽप्यन्तरतोऽन्तर्हिता अभवन् । तमेतमीरिणप्रायमपुण्यदेशं वरुणाज्ञया समागत्य हिरण्यकशिपुर्महाबलिष्ठोऽसुरराजः पुनरावासयत् । कश्यपपुरं च मूलस्थानं स्वराजधानीनगरं कृत्वाऽत्रदेशे न्यवसत् इति देवासुरख्यातौ विस्तरतो व्याख्यातम् ॥

हिरण्यकशिपोः किञ्चित् प्राचीनोऽयं कर्दमदौहित्रः सोमः । ततोऽप्यत्यासन्नपूर्वः स भद्राश्वदौहित्रः सोम इति पूर्वापरप्रसङ्गपर्य्यालोचनादवगम्यते । तदित्थं सोमद्वयसत्त्वे सोमसम्बन्धेन यदूर्ध्वं किञ्चिद्वक्ष्यामस्तदितिवृत्तं पूर्वेण सम्बद्धमुत्तरेण वेति सन्दिग्धमपि यथाशक्यं निर्द्धारयितव्यम् ॥

ब्रह्मणः पुत्रोऽयमत्रिस्तावद् ब्राह्मणो महर्षिरेवासीन्न क्षत्रियो राजा वा । अतएव ब्राह्मणपुत्रत्वादस्य चन्द्रस्यापि ब्राह्मणत्वमेव युज्यते । किन्तु पश्चादयं ब्रह्मप्रसादादुत्तरदिक्पालत्वं लेभे ।

"द्विजानां वीरुधां चैव नक्षत्राणां ग्रहैः सह ।
यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत् ॥

इति ब्रह्माण्डाद्युक्तेर्गगनचरस्य चन्द्रस्य ब्राह्मणादीन् प्रत्याधिपत्यव्यवस्थानवदमुष्य भूमिष्ठस्य नरविधस्य चन्द्रस्यापि देवेषु गन्धर्वान् प्रति, मनुष्येषु ब्राह्मणान् प्रति, पशुषु शशादीन् प्रति, वीरुत्स्वोषधीः प्रति, धर्मेषु यज्ञतपांसि प्रति च लोकपालत्वं ब्रह्मणाऽक्रियत । ततोऽसौ राज्येऽभिषिक्तत्वात् क्षत्रियत्वेन प्रसिद्धोऽभूत् । अत एवायमेकत्र श्रुतौ ब्रह्मणस्पत्यादिवर्गे पठितत्वाद् ब्राह्मणत्वेनैवाभिमतोऽपि पश्चादन्यत्र श्रुतौ लोकपालत्वाभिमानेन क्षत्रियवर्गे श्रूयते "ब्रह्म वा अग्निः क्षत्रं सोमः" इति

पू. प. उ. द.
कौषीतकिश्रुतेः ( ६ । ५ ) ॥ "यान्येतानि देवत्रा क्षत्राणि—इन्द्रो वरुणः सोमो रुद्रः
वा. आ. नै. ई.
पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्रात् परं नास्ति । तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये"—इति वाजिश्रुतेश्च । ( १४ कां । ४ अ. । २ । ब्रा. ) एते चाष्टौ क्रमेण पूर्वपश्चिमयोरुत्तरदक्षिणयोर्वायव्याग्नेययोर्नैर्ऋत्यैशानयोरधिपतय आसन्निति दिक्पालत्वमप्येषामाख्यातं भवति ॥ पर्जन्योऽयं मेघोत्पादको वायुविशेषः । अग्निर्द्विविधः श्रुतौ व्याख्यातः । शिवश्च घोरश्चेति । तत्र घोरोऽयमग्निरत्र यमशब्देनाख्यातः ॥ एषामभिमानिनो देवा इह लोकपाला विवक्षिताः ॥ (म. ८ )–( ब्र. पू. ११)

यद्यपि पुराणेषु मात्स्यब्रह्माण्डादिषु ऋषयोऽप्यनेके लोकपालाःसमर्य्यन्ते—सुधर्मा प्राच्यां, शंखपदो दक्षिणस्यां, केतुमान् प्रतीच्यां, हिरण्यरोमा चोदीच्यामधिपतय इति ॥

पूर्वेण दिक्पालमथाभ्यषिञ्चन्नाम्ना सुधर्माणमरातिकेतुम् ।
ततोऽधिपं दक्षिणतश्चकार सर्वेश्वरं शंखपदाभिधानम् ॥ १ ॥

स केतुमन्तं च दिगीशमीशश्चकार पश्चाद् भुवनाण्डगर्भः ।
हिरण्यरोमाणमुदग्दिगीशं प्रजापतिर्देवसुतं चकार ॥ २ ॥
अद्यापि कुर्वन्ति दिशामधीशाः शत्रून् दहन्तस्तु भुवोभिरक्षाम् ।
चतुर्भिरेभिः पृथुनामधेयो नृपोऽभिषिक्तः प्रथमं पृथिव्याम् ॥३॥ इति(मात्स्ये८अ.)

नैषां दिक्पालत्वमेवासील्लोकपालत्वमप्येषां स्मर्य्यते—

"सुधर्म्मा स तु वैराजः प्राचीं दिशमुपाश्रितः ।
लोकपालः स धर्म्मात्मा गौरीपुत्रः प्रतापवान् ॥ १ ॥
स वै शंखपदः श्रीमान् लोकपालः प्रजापतिः ।
दक्षिणस्यां दिशि रतः काम्या दत्ता प्रियव्रते ॥ २ ॥
रत्नाद्धराङ्गचजनयन्मार्कण्डेयी यशस्विनी ।
प्रतीच्यां दिशि राजानं केतुमन्तं प्रजापतिम् ॥ ३ ॥
हिरण्यरोमा पर्जन्यो मारीच्यामुदपद्यत ।
आभूतसंप्लवस्थायी लोकपालः स वै स्मृतः ॥ ४ ॥ ( ब्रह्माण्डे पूर्व. ११ अ. )

तथापि नैतावता देवानामष्टानामिन्द्रादीनां दिक्पालत्वं लोकपालत्वं वा व्याहन्यते । भिन्नार्थत्वात् । तथा हि—त्रिविधं राज्यशासनं भवति—स्वेच्छातन्त्रं, नीतितन्त्रं प्रजातन्त्रं च । तत्रादौ स्वेच्छातन्त्रस्यैव सृष्टिरासीत् । स्वेच्छाचारेण शासनं कुर्वतो वेनस्य महाराजस्य दुःशासनप्रक्रियया परिक्रुद्धास्तदानींतना धर्माधिकारिणो विद्वांसो महर्षयस्तं वेनं विनिपात्य तस्य स्थाने पृथुं राजानमभ्यषिञ्चन् । वेनेन सहैव ते स्वेच्छातन्त्रशासनस्याप्यन्तं चक्रुः । राज्यशासनाय च ते धर्म्मानुकूलां नीतिं निर्म्माय तस्या एव नीतेः परिरक्षार्थं पृथुं राजानं कृत्वा तन्नीत्यनुसारेणैव राज्यं कर्तुमेनमाज्ञापयन् । तदित्थं नीतितन्त्रशासकानां राज्ञां प्रथमोऽयं राजा पृथुरभूदिति कृत्वैव स प्रथमराजत्वेनाभिष्टूयते भूयसा पुराणेषु यथाऽस्मैयाष्टादशे—राजसूयाभिषिक्तानामाद्यः स पृथिवीपतिः । पृथुर्वैन्यः प्रजाः सर्वा ररक्ष क्षत्रपूर्वजः" इति ॥ तत् समये राज्यप्रबन्धे भूयान् संस्कारः परिष्कारश्चोपपेदे । तदनुसारेणैवाखिलपृथ्वीनाथस्यैकच्छत्रस्य पृथोरस्य शासनाधीनायामस्यां पृथिव्यां सुधर्मशंखपदादयश्चत्वारः प्रान्तशासका अकल्प्यन्त । ते च पृथोराज्ञावशंवदा एव तत्तत्प्रान्तशासनं नीत्यनुसारेण कुर्वन्तिस्म । तेषामेव प्रान्तशासकानां प्रबन्धेनैतेषु प्रान्तेषु ग्रामखर्वटनगरजनपदादयः कृषिकर्माणि तदर्थाः क्षेत्रकेदारादयः कर्षकाणां स्वामिनश्च दायव्यवस्थाः पशुचारार्थमरण्यभूमयः संसरणानि मार्गरक्षकाश्च व्यवस्थिता अभवन् । नातः पृथोः पूर्वमेषां स्वरूपं किञ्चिद् व्यवस्थितमासीत् । तत्कालिकप्रान्ताधीशानां सुधर्मादीनां प्रकल्पिताभिर्व्यवस्थाभिरेवाद्यापि तत्तत्प्रान्तेषु सर्वलोकव्यवहाराद् भुवोभिरक्षा भवतीति मात्स्यपुराणादिवचनाभिप्रायो गम्यते । तथा चैते चत्वारो दिक्पाला लोकपालाः पृथुराजसंबन्धिनः पृथगेवासन् । इन्द्रादयस्त्वष्टौ दिक्पाला देवलोकेऽमरावती नगरे सुधर्म्मानाम्न्यां देवसभायां सभेयाः सन्तः सर्वलोकशासका आसन् । त एव चोपमेरौ प्राग्ज्योतिषनगरे ज्योतिष्मत्यां सभायां सभेया आसन् । एषां च प्रजातन्त्रशासनशास्तृत्वमासीदित्यन्यत्र प्रपञ्चितम् ॥

एषु चाष्टासु लोकपालेषूपदिक्पालाश्चत्वारोऽग्निमृत्युवाय्वीशानाः साधारणा एव देवा ब्रह्मकृपया नियुज्यन्ते स्म। किन्त्वन्ये चत्वारो मुख्या दिक्पाला राजान एव सन्तो लोकपालपदे प्रतिष्ठाप्यन्ते स्म न तु अराजानः केचित्। तथा च देवराजः प्राच्याः, असुरराजः प्रतीच्याः, पितृराजो दक्षिणस्याः, गन्धर्वराज उत्तरस्या लोकपालो भवेदिति ब्रह्मकृताद् राजकीयव्यवस्थानियमात् पुरा देवयुगे लोकपालपदमेव सर्वाधिकारापेक्षयाऽप्युच्चतमं प्रतिष्ठितं पदमासीत्। तत्राप्युपदिक्पालापेक्षया मुख्यदिक्पालानां विशिष्टं गौरवमासीत्। तत्र पूर्वपश्चिमलोकपालयोरिन्द्रवरुणयोः संनिवेशे जातेऽपि तृतीयचतुर्थदिक्पालयोः स्थानं यावद्रिक्तमासीत्, तस्मिन्नवसरेऽयमत्रिपुत्रश्चन्द्रस्तदिदं मुख्यदिक्पालपदं प्राप्तुं कामयमानो ब्रह्माणमभ्यर्थयामास। किन्तु नाराजा दिक्पालो भवतीति नियमादयमात्रेयश्चन्द्रः साधारणदेवतया मुख्यदिक्पालपदं प्राप्तुं नार्हतिस्म। ततस्तादृशयोग्यतासंपत्त्यर्थं लोके प्रसिद्ध्यर्थं चैष ब्रह्मा चन्द्रमेतं दशाश्वे रथेऽध्यारोप्य सागरान्तां सर्वां पृथिवीं त्रिःसप्तकृत्वः परिभ्राम्य स्वकीयं ब्रह्मलोकमनयत्॥ तत्रैतस्य चन्द्रस्य लोकपालत्वप्रदानाय ब्रह्मर्ष्यादयो ब्रह्माणं प्रार्थयामासुः। तदुक्तं मात्स्ये त्रयोविंशाध्याये, पाद्मसृष्टौ च द्वादशाध्याये, ब्राह्मसप्तमाध्याये च—

"युवानमकरोद् ब्रह्मा सर्वायुधधरं नरम्।
स्यन्दनेऽथ सहस्राश्वे वेदशक्तिमये प्रभुः॥ १॥
आरोप्य लोकमनयदात्मीयं स पितामहः।
तत्र ब्रह्मर्षिभिः प्रोक्तमस्मत्स्वामी भवत्वयम्॥ २॥
पितृभिर्देवगन्धर्वैरोषधीभिस्तथैव च।
तेनौषधीशः सोमोऽभूद् द्विजेशश्चापि गद्यते॥ ३॥ इति॥

ततोऽयं चन्द्रो ब्रह्मप्रसादाद् गन्धर्वाणामाधिपत्येऽभिषिक्तोऽभूत्। तृतीयलोकपालत्वं चास्मै प्रददौ। यज्ञविद्वेषिभिर्यज्ञमुख्यसाधनसोमवल्लीसमूलविध्वंसनाय प्रयतमानैरसुरैः कृतोपघातात् सोमोत्पत्तिप्रदेशानां हेमकूटादिपर्वतानां परिरक्षणार्थमिन्द्रनियुक्ताः पञ्चकोटिमिता गन्धर्वा हेमकूटगिरिश्वेतगिरिप्रान्तदेशानारभ्य दक्षिणसमुद्रं यावत् सिन्धुमहानदस्य दक्षिणकूलमारभ्य पश्चिमप्रान्तदेशानभिव्याप्य न्यवसन्। तेषामेवानुरोधेनायं गन्धर्वराजः सोमोपि तत्रैव देशे पुष्पकेतुनाम्नि पर्वते क्वचिद्राजधानीं निर्माय हेमकूटादिपर्वतेषु सोमौषधिपरिरक्षायां दृढपरिकरो बभूव॥

अत्रोत्तरदिक्पालस्य तृतीयत्वाख्यानादिन्द्रः पूर्वं ततो वरुणस्ततः सोमस्ततः पितृपतिस्ततोऽन्ये इत्येवं लोकपालानां प्रतिष्ठानक्रमो गम्यते।

अथायं देवराजः शतं महायज्ञानाहृत्य राज्ञां सम्राजां चाधिपतिः स्वराड्भवितुं कृतप्रयत्नोऽभूत्। तस्य तथात्मोन्नतिकृतेऽध्यवसायं विज्ञाय तदीर्ष्यया तदानीमसुरा अपि सर्वे निजस्वामिनं वरुणमतियज्ञेन राजसूयेन याजयामासुः। तेनायं वरुणो राजाऽपि सन् पश्चात् सम्राड् बभूव। "आहर्ता राजसूयस्य सम्राडिति ह विश्रुतः"—

इति ब्राह्मषष्ठाध्यायोक्तेः॥अथ तदीर्ष्ययाऽयं गन्धर्वराजः सोमोऽपि राजसूयं यज्ञं कर्तुमैच्छत् । किन्तुप्रबलप्रतापानां प्रचुरराजसत्ताकानामसुराणां साहाय्येनायं वरुणो राजसूयं संपादयितुं पारयामास । न तथास्य गन्धर्वराजस्य सोमस्य राजसूयं विधातुं संभारः सुलभ आसीत् । बहूनां हि राज्ञामध्यक्षो राजसूयेन यष्टुमीष्टे न साधारणो राजेति नियमात् । ततोऽयं तादृशयोग्यतालाभार्थमादौ सौकरवे क्षेत्रे तपश्चरितुमारेभे । बलविशेषोन्नतिलाभार्थं त्रय एवोपायाः पुरात्वे विद्वद्भिर्निरधार्य्यन्त यज्ञस्तपो दानमिति—दानं दुर्बलं, ततो बलवत् तपः, ततोऽप्यतिबलीयानयं यज्ञः । स राजसूयं यज्ञं कर्तुमशक्नुवानस्तद्यज्ञकरणबललाभार्थं यज्ञाधिष्ठातारं विष्णुं परितोषयितुं सौकरवक्षेत्रे तपश्चक्रे । तत्क्षेत्रमाहात्म्यमुक्तं वाराहे सप्तत्रिंशशताध्याये पृथ्वीं प्रति—

विष्णुरुवाच ।

तत्र सौकरवे तीर्थे चन्द्रो विष्णुमतोषयत् ।
प्राप्ता च परमा सिद्धिः सोमतीर्थेऽन्यदुर्लभा ॥ १ ॥
यत्र तप्तं तपस्तेन सोमेन सुमहात्मना ।
पञ्चवर्षसहस्राणि एकपादेन तिष्ठता ॥ २ ॥
पञ्चवर्षसहस्राणि तथैवोर्ध्वमुखः स्थितः ।
एवमुग्रं तपः कृत्वा कान्तिमानभवच्च सः ॥ ३ ॥
ममापराधान्मुक्तश्च ब्राह्मणानां पतिस्तथा ।
तस्य चिह्नं प्रवक्ष्यामि सोमतीर्थस्य सुन्दरि ॥ ४ ॥
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
प्रवृत्ते चान्धकारे तु यत्र कश्चिन्न दृश्यते ॥ ५ ॥
सोमेन च विना भूमिर्दृश्यते चन्द्रसप्रभा ।
अलोकश्चैव दृश्येत सोमस्तत्र न दृश्यते ॥ ६ ॥
एतच्चिह्नं महाभागे क्षेत्रे सौकरवे मम ।
सोमतीर्थे विशालाक्षि एष वै विस्मयः परः ॥ ७ ॥ इति ॥

सहस्रशब्दः पूर्णार्थः । पूर्णानि दशवर्षाणि तपश्चक्रे इत्यर्थः । यत्तु मात्स्ये त्रयोविंशे पाद्मसृष्टौ च द्वादशे—

"ततः पाद्मसहस्राणां सहस्राणि दशैव तु ।
तपश्चचार शीतांशुर्विष्णुध्यानैकतत्परः ॥ १ ॥
ततस्तुष्टस्तु भगवांस्तस्मै नारायणो हरिः ।
वरं वृणीष्व प्रोवाच परमात्मा जनार्दनः ॥ २ ॥
ततो वव्रे वरान् सोमः शक्रलोकं जयाम्यहं ।
प्रत्यक्षमेव भोक्तारो भवन्तु मम मन्दिरे ॥ ३ ॥

राजसूये सुरगणा ब्रह्माद्याः सन्तु मे द्विजाः ।
रक्षःपालः शिवोऽस्माकमास्तां शूलधरो हरः ॥ ४ ॥
तथेत्युक्तः स आजह्रे राजसूयं तु विष्णुना ।
होतात्रिर्भृगुरध्वर्युरुद्गाताभूच्चतुर्मुखः ॥ ५ ॥
ब्रह्मत्वमगमत्तस्य उपद्रष्टा हरिः स्वयम् ।
सदस्याः सनकाद्यास्तु राजसूयविधौ स्मृताः ॥ ६ ॥
चमसाध्वर्यवस्तत्र विश्वेदेवा दशैवतु ।
त्रैलोक्यं दक्षिणा तेन ऋत्विग्भ्यः प्रतिपादितम् ॥ ७ ॥

इति पद्मसहस्राणां दशसहस्राणि तपः काल उक्तः । तेनापि दशैव वर्षाणि कालो लभ्यते । पद्मशब्दः पृथिव्यर्थः पद्मपुराणे व्याख्यातः । सहस्रशब्दस्तत्परिमित-पृथिव्यंशपरः । यथा षष्ट्युत्तरत्रिशतीमिताः पृथिव्यंशा अहोरात्रानुरोधेन कल्प्यन्ते तथैव सूर्य्यसहस्रांशुभोगानुरोधेनास्यां सहस्रांशाः कल्प्यन्ते । तेषां च सहस्रमिताः सूर्य्यसहस्रांशुभिः संयोगा एकस्मिन् संवत्सरे संपद्यन्ते । तेन पद्मसहस्राणामेकं सहस्रमेकः संवत्सरो नाम । संवत्सरान् दशेति स्पष्टं वक्तुमौचित्त्येऽपि परोक्षविधया-र्थनिदर्शनं पौराणिकानां समयसिद्धमित्यूह्यम् ॥ शक्रलोकं जयाम्यहमित्यस्यामराव-त्यामिन्द्रवन्मुख्यदिक्पालप्रतिष्ठां प्राप्नुयामित्यर्थः । यच्च ब्राह्मसप्तमे—

"तपस्तेपे महाभागः पद्मानां दशतीर्दश ।
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदांवरः ॥ १ ॥
स तत् प्राप्य महाराज्यं सोमः सौम्यवतांवरः ।
समाजह्रे राजसूयं सहस्रशतदक्षिणम् ॥ २ ॥

इति पद्मानां दशतयो दशोच्यन्ते । तत्र नैतै पद्मदशतिशब्दौ संख्यावचनौ किन्तु पद्मानां सूर्यमण्डलभूमण्डलचन्द्रमण्डलानामंशुभिर्द्वारैर्या दशतयो दशनानि दन्ताघातवन्मिथः परिघट्टनानि तान्येकस्मिन् संवत्सरेऽष्टदिक्पत्राण्यभिव्याप्य संपद्यन्ते तथा च दशतयो दशेत्युक्त्या संवत्सराणि दशेत्येवार्थो निष्कृष्यते । युक्तं चै-तत् । अन्यथा स्वारसिकार्थमात्रलापने सर्वपुराणवचनानां परस्परव्याहतार्थतया विरोधादप्रामाण्यं स्यादिति बोध्यम् ॥

इतरेषां राजसूये स्वाधीना राजान एव सर्वे कर्मकरा भवन्ति किन्तु चन्द्रकृते राजसूये साधारणराजवर्गादप्यतिविशिष्टा देवा एव कर्मकरा बभूवुरिति वैशिष्ट्यं चन्द्रस्य सिद्धम् । तदित्थमयं चन्द्रोऽपि वरुणवत् पश्चात् सम्राडभवत् ॥

अथैतस्मिन् राजसूययज्ञे समाप्ते वैशिष्ट्यमागतं तं चन्द्रं परिद्रष्टुं यथान्ये सर्वे ऋषयः पितरो देवा असुरा मनुष्याश्चोपतस्थिरे तथैव देवपत्न्योऽपि तदानीमुपतस्थुः । तत्र नव देव्यः कामबाणाहताः सत्यस्तं चन्द्रं कामयामासुः । तदुक्तं मात्स्ये त्रयोविंशाध्यायेऽग्निपुराणेऽप्येवं चतुःसमत्यधिकद्विशततमाध्याये—

ततः समाप्तेऽवभृथे तद्रूपालोकनेच्छवः ।
कामबाणाभितप्ताङ्ग्यो नव देव्यः सिषेविरे ॥ १ ॥
लक्ष्मीर्नारायणं त्यक्त्वा सिनीवाली च कर्दमम् ।
द्युतिर्विभावसुं तद्वत्तुष्टिर्धातारमव्ययम् ॥ २ ॥
प्रभा प्रभाकरं त्यक्त्वा हविष्मन्तं कुहूः स्वयम् ।
कीर्तिर्जयन्तं भर्तारं वसुर्मारीचकश्यपम् ॥ ३ ॥
धृतिस्त्यक्त्वा पतिं नन्दिं सोममेवाभजंस्तदा ।
स्वकीया इव सोमोऽपि कामयामास तास्तदा ॥ ४ ॥
एवं कृतापचारस्य तासां भर्तृगणस्तदा ।
न शशाकापचाराय शापैः शस्त्रादिभिः पुनः ॥ ५ ॥
संघर्षे समनुप्राप्ते ब्रह्मा चन्द्रं न्यवारयत् ।
तथाप्यराजत विधुर्दशधा भावयन् दिशः ॥ ६ ॥
सोमः प्राप्याथ दुष्प्राप्यमैश्वर्यमृषिसत्कृतम् ।
सप्तलोकैकनाथत्वमवाप तपसा तदा ॥ ७ ॥

एतस्मिन्नेव समये दक्षस्य महर्षेः षष्टिः कन्या आसन् । ताभिरस्य सप्त जामातरोऽभवन्—चन्द्रः कश्यपो धर्मोऽङ्गिराः कृशाश्वो भार्गवोऽरिष्टनेमिश्च । तत्र—

"दक्षस्तु षष्टिकन्यास्तु सप्तविंशतिमिन्दवे ।
ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ १ ॥
द्वे चैवाङ्गिरसे प्रादाद् द्वे कृशाश्वाय धीमते ।
द्वे चैव भृगुपुत्राय चतस्रोऽरिष्टनेमिने ॥ २ ॥

इति सर्वपुराणप्रसिद्ध्याऽस्य चन्द्रस्य रोहिणीप्रमुखा नक्षत्रनाम्न्यः सप्तविंशतिर्भार्या अभवन् । तासां रोहिणीप्रमुखनामकरणेन तदात्वे व्योम्नि भचक्रे रोहिण्यामेव वसन्तसंपात आसीदिति गम्यते । तथा च रोहिण्या ज्येष्ठत्वादाभिरूप्याच्च तत्रैवास्य चन्द्रस्य भूयान् प्रेमासीन्न तथान्यास्विति कृत्वा सर्वास्ता असंतुष्टा भूत्वा तादृशचन्द्रापचारं स्वपित्रे दक्षाय प्रोचुः । सर्वासु तासु साम्येन वर्तयितुं दक्षेण भूयसा प्रबोध्यमानोऽप्यतिगर्वितः स चन्द्रो यदा न किञ्चिद्दक्षवचनमन्वरुध्यत तदा क्रुद्धो दक्षस्तस्मै शापं ददौ तदुक्तम् वाराहे पञ्चत्रिंशे—

ब्रह्मणो मानसः पुत्रो ह्यत्रिर्नाम महायशाः ।
तस्य पुत्रो भवत्सोमो दक्षजामातृतां गतः ॥ १ ॥
याः सप्तविंशतिः कन्या दाक्षायण्यः प्रकीर्तिताः ।
सोमपत्न्योऽतिमान्यास्तास्तासां श्रेष्ठा तु रोहिणी ॥ २ ॥
तामेव रमते सोमो नेतरास्विति शुश्रुम ।
इतराः प्रोचुरागत्य चन्द्रस्यासमतां पितुः ॥ ३ ॥
दक्षोऽप्यसकृदागत्य तमुवाच स नाकरोत् ।
समतां सोपि तं दक्षः शशापान्तर्हितो भव ॥ ४ ॥ इति ॥

अस्या रोहिण्याः पुत्रोऽयमिति कृत्वा बुधो रौहिणेय उच्यते। यद्यपि बृहस्पतिपत्न्यास्ताराया गर्भजोऽयं बुधो न रोहणीगर्भजस्तथापि सोमौरसोऽयं बुधः सोमपत्नीषु ज्येष्ठत्वात् पट्टराज्ञा रोहिण्या एवायं पुत्रो नियम्यत इत्यतः स रौहिणेयः प्रसिद्धोऽभूत् अत एवोक्तं ब्रह्माण्डपूर्वभागे दशमाध्याये शिवाष्टमूर्तिप्रसङ्गे—

"नाम्नाष्टमस्य महतस्तनुर्या चन्द्रमाः स्मृतः।
तस्य वै रोहणी पत्नी पुत्रस्तस्या बुधः स्मृतः॥ १ ॥ इति।

अथ सर्वलोकाधिनाथस्य ब्रह्मणो विराजः परमानुग्रहभाजनत्वादत्युन्नतलोकपालपदलाभाद् ब्राह्मणगन्धर्वौषध्याद्यत्युत्कृष्टाधिपत्याधिष्ठातृत्वाच्चैनं चन्द्रं भूयान् मद आविवेश। अतिशयसुभगमूर्तितया स्त्रीवर्गप्रियत्वाच्चैनं नितान्तस्त्रैणप्रकृतिं भूयान्मद आविवेश। मदावलेपाच्चासौ कार्य्याकार्य्यविमूढो भूत्वा तारां नाम गुरुपत्नीमप्येकदा निर्लज्जो निर्भयश्चापजहार। अस्ति खलु देवानां पुरोधाः बृहस्पतिर्नाम। स हि देवेन्द्रस्वाराज्यधुरन्धरो महामन्त्री प्रधानसेनाध्यक्षश्चासीत्। शस्त्रास्त्रशिक्षायां नीतिशिक्षायां चैष सर्वेषां देवानां गुरुरासीत्। अत एवास्य देवलोके महती प्रतिष्ठाऽत्यधिकश्च संमानः प्रवर्ततेस्म। तस्य च दयिता भार्याऽऽसीत् तारका नाम। तस्या मातापितृकुले विकेशीति नामासीत्। भर्तृकुले तु जुह्वरिति नामकरणं जातम्। तथापि लोकव्यवहारे त्वस्यास्तारेत्येव प्रसिद्धं नामासीत्। सा चैकदा यजमानस्य चन्द्रस्य भवनं केनाप्यर्थेनाजगाम। तामत्यर्थं रूपयौवनशालिनीं दृष्ट्वैवायं चन्द्रः कामातुरो जातः। साऽपि तं मनोविकाराकारितविलक्षणचेष्टावन्तं दृष्ट्वैव सहसा मदनाऽऽतुरा जाता। इत्थमन्योन्यानुरागवशवर्तिनौ तौ क्रमशः प्रवृद्धवैजात्यौ परस्परस्पृहया मदमत्तौ रेमाते। उक्तं च ब्राह्मे—

"तावद्धैर्यनिधिर्ज्ञानी मतिमान् विजितेन्द्रियः।
यावत्स कामिनीनेत्रवागुराभिर्न बध्यते॥ १ ॥
विशेषतो रहःसंस्थां कामिनीमायतेक्षणाम्।
विलोक्य न मनो याति कस्य कामेषु वश्यताम्॥ २ ॥
अत एवान्यपुरुषदर्शनं न कदाचन।
कुलवध्वा रहःकार्य्यं भीतया शीलविप्लुतेः॥ ३ ॥

रममाणयोस्तयोः कतिचित् दिनानि तत्रैवातिक्रान्तानि। चन्द्रगृहे च निवसन्त्यास्तस्यास्तारायाः सुभेति नामान्तरमक्रियतेति स्मर्य्यते। ततस्तामनासाद्य दुःखार्तो बृहस्पतिस्तारां गृहमानेतुं शिष्यं प्रेषयामास। किन्तु वशीकृता सा तारा नायाता। ततश्चन्द्रः पुनः पुनः शिष्यं परावर्तयत। ततोऽतिक्रुद्धो बृहस्पतिः स्वयमेवाजगाम चन्द्रं च स्मयमानमुवाच—"चन्द्र! किमिति दुष्कृतं कर्म कृतवानसि? जानासि, त्वं मे यजमानो भवसि। तवाहं गुरुः। कथं नाम गुरुदारास्त्वया भुक्ता रक्षिता वा—

"ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ।
महापातकिनो ह्येते तत्संसर्गी च पञ्चमः ॥ १ ॥"

रे दुराचार ! यदि त्वया ज्ञानादियमङ्गना भुक्ता ततो महापातकयुक्तस्त्वं न देवसदनार्हः सांप्रतमवतिष्ठसे । अद्यापि मुञ्च मुञ्च तामिदानीं मम सदनं नयामि । नोचेत्—रे दुष्टात्मन् ! त्वां गुरुदारापहारिणं प्रथयिष्यामि । इत्येवं भाषमाणं दारापहारात् क्रोधान्धं गुरुमालोक्य स्मयमानो रोहिणीपतिरुवाच । भगवन् ! जहि क्रोधम्—

"अपकारिणि चेत् क्रोधः क्रोधः क्रोधे कथं न ते ।
धर्मार्थकाममोक्षाणां चतुर्णां परिपन्थिनि ॥ १ ॥"

अपि च क्षमासारा हि ब्राह्मणा भवन्ति । ते यदि क्रोधवर्जिता धर्मशास्त्रज्ञा भवेयुस्तर्हि पूज्यन्ते । अथ चेत् क्रोधेनाक्रम्यन्ते ततो दुराराध्यास्त्यज्यन्ते । तस्माच्छान्तो भव । धैर्य्यमवलम्बस्व । स्थाने वर्तते तारा नाकाण्डे पतिता । काम सा ते गृहं स्वयमेवागमिष्यति । यजमानस्य गृहमिति मत्वा यदृच्छया तावदत्रैवावतिष्ठते । तावता का ते हानिः । इह सा सुखं लभते । कतिचिद्दिनानि सुखेनावस्थाय स्वेच्छयैवागमिष्यति । भगवन् ! भवान् धर्मं जानाति । भवतैव च पूर्वमुदाहृतोऽयं धर्म्मः कथमिदानीं न स्मर्य्यते ।

"न स्त्री दुष्यति जारेण न विप्रो वेदकर्म्मणा"

ततस्तावदिदानीं गच्छ । इत्येवमुक्तो गुरुरातुरोऽपि चिन्ताविष्टः स्वगृहं ययौ। कतिचिदेव दिनानि स्थित्वा चिन्ताकलुषितान्तरः पुनरौषधीपतेः सदनमाससाद । किन्तु क्षत्रा प्रतिषिद्धोऽसौ द्वारदेशे एवातिरुषान्वितस्तस्थौ । चन्द्रोऽपि तत्र नायातः । ततो विवर्णो वृहस्पतिर्व्याकुलस्तत्रैव क्रोधं नाटयति । रे शिष्यापसद ! रे मूढ ! आदौ मातृभूतां गुरुपत्नीं हृतवानसि । ततो गुरुवचनमतिक्रान्तवानसि । रे देवापसद ! अवारितद्वारोऽप्यहमिदानीं वारितो द्वारि निराकृतः । रे पापाचार ! अत्राप्यागत्य मां न प्रत्युपतिष्ठसे । अरे शूद्र ! किमिति भवने शेषे, बहिर्भव । देहि देहि मे कामिनीं नोचेदद्य शापं ददामि—

"करोमि भस्मसान्नूनं न ददासि प्रियां मम ।
कृतकर्म्मफलं मन्द ! नचिरात्तर्हि भोक्ष्यसे ॥ १ ॥"

इत्येवमादीनि क्रूराणि भाषणानि श्रुत्वा, चन्द्रः सत्वरं सदनाद् बहिराजगाम । हसंस्तमुवाच—किमिदमित्थं बहु वल्गसे । नेयमसितापाङ्गी सर्वशुभलक्षणा तव योग्या । काञ्चिदन्यां कुरूपां स्वसदृशीं स्त्रियं गृहाण । न पुनरीदृशी राजकुलयोग्या वरवर्णिनी भिक्षुकस्य गृहे स्थातुं युज्यते—

"रतिः स्वसदृशे कान्ते नार्य्याः खलु निगद्यते ।
न त्वं जानासि मन्दात्मन् ! कामशास्त्रविनिर्णयम् ॥ १ ॥

यथेच्छं गच्छ दुर्बुद्धे ! नाहं दास्यामि कामिनीम् ।
यच्छक्यं कुरु तत्कामं न देया वरवर्णिनी ॥ २ ॥
कामार्तस्य च ते शापो न मां बाधितुमर्हति ।
न ददे न ददे कान्तां यथेच्छसि तथा कुरु ॥ ३ ॥"

अथायमित्थं शशिना प्रत्याख्यातो बृहस्पतिः स्तब्धक्षुब्धान्तरो निरन्तरोदग्र-व्यग्रताग्रस्तः क्रुद्धो रुष्टश्चाभूत् । यद्यप्ययं बृहस्पतिर्देवपुरोधा ऋषिजातीयो देव आसीत् । चन्द्रस्तु गन्धर्वजातीयो देवः । ऋषिगन्धर्वदेवेषु च परस्त्रीग्रहणं नात्यन्तं निन्दितं कर्मासीत् । व्यवहारप्राप्तत्वात् । तथापि स्वधनापहरणवद्दारापहरणेपि प्रकृतिस्वाभाव्याद्देवात्मा विक्षुब्धः क्रोधकलुषितो भवतीत्यतः स बृहस्पतिस्तदानीं भूयो भूयश्चिन्तयामास—

"किं कुर्य्यां किं न वा कुर्य्यां कथं स्त्री लप्स्यते मम ।
इदं वाच्यमवाच्यं वा हंतोक्तवेदं त्वपत्रपे ॥ १ ॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
गञ्जनं चापमानं च मतिमान्न प्रकाशयेत् ॥ २ ॥
जन्मर्क्षं मैथुनं मन्त्रो गृहच्छिद्रं च वञ्चनम् ।
आयुर्धनापमाने स्त्री न प्रकाश्यानि सर्वथा ॥ ३ ॥ (काशीखण्डे )

अथवा किमेतेन । नायमस्या नीतेरत्रावसरः । इह तु पश्यामि—

"अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वार्थमभ्युद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ १ ॥
उपायेन कृतेनैव जानद्भिः साध्यते फलम् ।
वृथाभिमानिनः शीघ्रं विपद्यन्ते विनोद्यमम् ॥ २ ॥

इत्थमध्यवसाय स बृहस्पतिः साहाय्यप्रार्थनार्थं दिवस्पतेर्मघोनःस्थानं प्रतस्थे। स च शचीपतिर्गुरुमागतमालोक्य अभ्युत्थानाभिवादनैः पाद्यार्घ्याचमनीयादिभिः स्वागतैः सम्यगर्हणां चक्रे, पप्रच्छ च । गुरो !

"सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ।
केनापमानितोऽसि त्वं नष्टं वाऽपहृतं तव ॥ १ ॥
त्वदधीनमिदं सर्वं सैन्यं लोकाधिपैः सह ।
का चिन्ता ते महाभाग शीघ्रं कथय सुव्रत ॥ २ ॥

गुरुरुवाच—देवेश ! किं वदानि; अयं दुष्टात्मा चन्द्रो मदीयां भार्य्यां तारामपजहार । भूयसा प्रार्थितोऽपि न ददाति । ततः किं करवाणि । अत्रार्थे त्वमेव नः शरणं यदि शक्यते साहाय्यं कुरु, किमतः परं वाच्यम् ॥ इन्द्र उवाच । हन्त कीदृशः कालधर्म्मः । भगवन् ! मा शोकं कुरु, तवायं दासः सर्वथा ते भार्य्यामा-

नाघ्य समर्पयिष्यति । तत्र तावद् दूतं प्रेषयामि, अथापि चेदय मदाकुलो न प्रत्यर्पयिष्यति तत्तर्हि नूनमहं देवसैन्यैः समावृतो युद्धं करिष्यामि किमिति स न दास्यति; भगवन् ! प्रसीद ।" इत्येवमाश्वास्य वृद्धश्रवा वक्तुं विचक्षणं वार्ताशंसिनं सोमाय प्रेषयामास । स च त्वरितश्चन्द्रलोकं गत्वा रोहिणीपतिमुवाच—

"प्रेषितोऽहं महाभाग ! शक्रेण त्वां विवक्षया ।
कथितं प्रभुणा यच्च तद् ब्रवीमि यथायथम् ॥ १ ॥
धर्मज्ञोऽसि महाभाग ! नीतिं जानासि सुव्रत ।
अत्रिः पिता ते धर्मात्मा न निन्द्यं कर्तुमर्हसि ॥ २ ॥
भार्य्या रक्ष्या सर्वभूतैर्यथाशक्यमतन्द्रितैः ।
तदर्थे कलहः कामं भविष्यति न संशयः ॥ ३ ॥
यथा तव तथाऽन्येषां यत्नः स्याद्दाररक्षणे ।
आत्मवत्सर्वभूतानि चिन्तय त्वं महामते ॥ ४ ॥
अष्टाविंशतिसंख्यास्ते कामिन्यो दक्षजाः शुभाः ।
गुरुपत्नीं कथं भोक्तुं त्वमिच्छसि सुधानिधे ॥ ५ ॥
स्वर्गे सदा वसन्त्येता मेनकाद्या मनोरमाः ।
भुङ्क्ष्व ताः स्वेच्छया कामं मुञ्च पत्नीं गुरोरिमाम् ॥ ६ ॥
ईश्वरा यदि कुर्वन्ति जुगुप्सितमहंतया ।
अज्ञास्तदनुवर्तन्ते ततो धर्म्मक्षयो भवेत् ॥ ७ ॥
तस्मान्मुञ्च महाभाग ! गुरोः पत्नीं मनोरमाम् ।
त्वन्निमित्तोऽद्य देवानां कलहो न भवेद् यथा ॥ ८ ॥

इत्थं शक्रवचः श्रुत्वा सोमः किञ्चित् क्रोधाकुलो भूत्वा भङ्ग्या प्रत्यूचे । दूत ! त्वमितो गत्वा यथायथमिन्द्राय मदुक्तमिदं ब्रूहि—

त्वमेक एव धर्मज्ञः कोन्योऽस्ति त्वद्विधः प्रभो ।
पुरोधा अपि ते तादृक् युवयोः सदृशी मतिः ॥ १ ॥
अहो क्वासीदिदं ज्ञानमहल्यां भजतस्तव ।
पूर्वजानुजयोर्भार्य्ये भजतस्ते गुरोरपि ॥ २ ॥
परोपदेशे कुशला भवन्ति बहवो जनाः ।
दुर्लभस्तु स्वयं कर्ता प्राप्ते कर्मणि सर्वदा ॥ ३ ॥
बृहस्पतिप्रणीतं तु शास्त्रं गृह्णन्ति मानवाः ।
को विरोधोऽत्र देवेश ! कामयानां भजन् स्त्रियम् ॥ ४ ॥
स्वकीयं बलिनां सर्वं दुर्बलानां न किञ्चन ।
स्वीया च परकीया च भ्रमोऽयं मन्दचेतसाम् ॥ ५ ॥
नेयं तारा तथा जीवे यथा मय्यनुरज्यते ।
अनुरक्ता कथं त्याज्या धर्म्मतो न्यायतस्तथा ॥ ६ ॥

विरक्तेयं तदा जाता यदाऽसौ ते पुरोहितः ।
संवर्तभार्यां च रुमे चकमे ममतामपि ॥ ७ ॥
सपत्नीसंभवं दुःखं वैधव्यादधिकं स्त्रियः ।
मन्यन्ते नैव शोचन्ति तदानीं स्वहिताहितम् ॥ ८ ॥
यः स्वयं व्यभिचारी स्यात्तस्य स्त्री व्यभिचारिणी ।
स्त्रियं रक्षितुमिच्छेच्चेदनुरज्येत तत्र सः ॥ ९ ॥
न मन्त्रणाशतैर्भार्य्या शक्या केनाऽपि रक्षितुम् ।
केवलं सानुरागेण दंपत्यो रक्षिता भवेत् ॥ १० ॥
गृहारम्भस्तु रक्तायां विरक्तायां कथं भवेत् ।
ईश्वरोऽसि सहस्राक्ष ! यदिच्छसि कुरुष्व तत् ॥ ११ ॥

अथैवमुक्तो वार्ताहरः शक्रसन्निधिमासाद्य यथोक्तं सर्वमिन्द्रायाचष्ट । तच्छ्रुत्वा तुराषाडपि क्रोधाक्रान्तो भूत्वाः गुरो साहाय्यार्थं सेनोद्योगं चक्रे । शुक्रस्तु बृहस्पतेः पार्ष्णिग्राहेण वृद्धश्रवसा प्रवर्तमानमेवं विग्रहं श्रुत्वा गुरुद्वेषादागत्य सोमस्य पार्ष्णिं जग्राह । स हि ताराजारमुवाच । "हे चन्द्र ! हे मारिष ! मा ददस्व ताराम् । यदि चेन्द्रेण तव संग्रामो भविता, तदाऽहं ते मन्त्रशक्त्या साहाय्यं करिष्यामि ।" इति ॥ अङ्गिरस्तो लब्धविद्यः शङ्करोऽप्येवं गुरुदाराभिमर्शनमाकर्ण्य बृहस्पतेः पार्ष्णिग्राहो भूत्वा साहाय्यमकरोत् । इन्द्रद्वेषाद्वरुणोऽपि सोमतो बभूव । वरुणसम्बन्धात् शुक्रसम्बन्धाच्च सर्वेऽप्यसुरा इन्द्रप्रतिपक्षे देवसेनाभिः सह योद्धुं सन्नद्धा बभूवुः । तथा चाष्टसु लोकपालेषु सोमवरुणनिरृतयस्त्रयोऽप्येकतस्ततोऽन्ये—इन्द्राग्नियमरुद्रवायश्चेति पञ्चैकतो बभूवुः । अतः परं तारकासुरवद्देवदानवयोः प्रवृत्तः संग्रामो बहूनि वर्षाणि यावदतिक्रान्तः । तद् दृष्ट्वा भगवान् ब्रह्मा क्लेशापशान्त्यै हंसविमानारूढस्तं देशमाजगाम । राकापतिं प्राह च । मुञ्च गुरुभार्य्याम् नोचेद् विष्णुं समाहूय संक्षयं करिष्यामि । भृगो ! तवापि सङ्गदोषात् किं पापमतिर्जाता । विरमस्वैतत्साहाय्यकर्म्मणः । ददातु गुरवे तारां चन्द्रः" । ततो भृगुरपि शुक्रपिता तत्रागत्य तमौषधिपतिं निषेधयामास । हे अत्रिनन्दन ! तव पित्राहं प्रेषितः । गृहाण निदेशं "गुरोरद्यैव भार्य्यां मुञ्च" अथैवमाकर्ण्य पितृपितामहगौरवानुरोधेनासौ सुधाकरोऽनिच्छन्नपि गुरुपत्नीमन्तर्वत्नीमर्पयामास । अथ बृहस्पतिर्दयितामासाद्य हृष्टः स्वगृहं ययौ । देवाश्च दैत्याश्च स्वान् स्वान् गृहानाययुरिति सर्वं शान्तम् ॥

अत्राहुः केचित् । इदं ताराहरण गुरुदक्षिणाकालमुद्यानकालं स्वयंगताकालं चेति त्रिवारं कृतमिति पुराणालोकनादवगम्यते तथाहि चन्द्रस्तावदयमस्माद् बृहस्पतेरधीत्य सर्वा विद्याः शिक्षासमाप्तौ किं मया गुरुदक्षिणार्थे दातव्यमिति गुरुं पप्रच्छ । न मह्यं कश्चिदर्थोऽपेक्ष्यते । गुरुपत्नीं तु ब्रूहि सा यदिच्छति तत्तस्मै दत्त्वा समावर्तस्वेति गुरुणाज्ञप्तश्चन्द्रोऽन्तर्गृहं गत्वा गुरुपत्नीं तारां पप्रच्छ । गुरुदक्षिणार्थं किं मया देयमिति । इयं तु तारा गुरुगृहे भोजनाच्छादनादिना वा विषयान्तरेण वा कष्टमापन्ना चिराय रुष्टासीत् । अतः साऽन्नवस्त्रादिविशेषलाभार्थं शिष्यस्य

चन्द्रस्य तव गृहे गन्तुमिच्छामीत्येव गुरुदक्षिणां कामयामास॥चन्द्रोऽपि तां गृहीत्वा स्वगृहाननयत्। तामानेतुं कृतप्रयत्नायापि बृहस्पतये यदा चन्द्रस्तारां नार्पयत्, तदासौ बृहस्पतिः शुक्रं प्रार्थयामास। शुक्रस्तपसा शिवं समाराध्य तत्साहाय्येन चन्द्रं निर्भर्त्स्य, बलात्तारामानीय बृहस्पतये समर्पयत्। तदेतद् गुरुदक्षिणाकालं ताराहरणमाख्यातं ब्राह्मे गौतमी माहात्म्ये द्व्यशीतितमेऽध्याये—( ब्रा० गौ० मा० ८२ अ )

अत्रिपुत्रो महातेजाश्चन्द्रमा इति विश्रुतः।
सर्वान् वेदांश्च विधिवद्धनुर्वेदं यथाविधि॥ १॥
अधीत्य जीवात् सर्वाश्च विद्याश्चान्या महामते।
गुरुपूजां करोमीति जीवमाह स चन्द्रमाः॥ २॥
बृहस्पतिस्तदा प्राह चन्द्रं शिष्यं मुदान्वितः।
मम प्रिया तु जानीते यत् तारेच्छति देहि तत्॥ ३॥
प्रष्टुं तां च तदा प्रायादन्तर्वेश्म स चन्द्रमाः।
तारां तारामुखीं दृष्ट्वा जगृहे तां करेण सः॥ ४॥
स्ववेश्मप्रति तां लोभाद्बलादाकर्षयत्तदा।
उचितानुचितं किञ्चित् कामान्धो न ददर्श सः॥ ५॥
तावद्धैर्य्यनिधिर्ज्ञानी मतिमान् विजितेन्द्रियः।
यावन्न कामिनीनेत्रवागुराभिर्निबध्यते॥ ६॥
विशेषतो रहःसंस्थां कामिनीमायतेक्षणाम्।
विलोक्य न मनो याति कस्य कामेषु वश्यताम्॥ ७॥
अत एवान्यपुरुषदर्शनं न कदाचन।
कुलवध्वा रहः कार्य्यं भीतया शीलविप्लुतेः॥ ८॥
विज्ञाय तत्परिजनात् सहसोत्थाय निर्गतः।
दृष्ट्वा तद्दुष्कृतं कर्म बृहस्पतिरुदारधीः॥ ९॥
शशाप कोपाच्चाक्षिप्य वाग्भिर्विप्रियकारिभिः।
पराभिभूतामालोक्य कान्तां कः सोढुमीश्वरः॥ १०॥
जीवोऽपि देवैर्युयुधे तेन चन्द्रमसा रुषा।
न शापैर्हन्यते चन्द्रो न मन्त्रैर्नायुधैरपि॥ ११॥
तदा चन्द्रस्तु तां तारां नीत्वा संस्थाप्य मन्दिरे।
बुभुजे बहुवर्षाणि रोहिणीं चाकुतोभयः॥ १२॥
न जीयते यदा देवैर्न कोपैः शापमन्त्रकैः।
न राजभिर्न ऋषिभिर्न साम्ना भेददण्डनैः॥ १३॥
यदा भार्य्यां न लेभेऽसौ गुरुः सर्वप्रयत्नतः।
सर्वोपायक्षये जीवस्तदा नीतिमथास्मरत्॥ १४॥
अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
स्वार्थमुद्धरते प्राज्ञः स्वार्थभ्रंशो हि मूर्खता॥ १५॥

एवं निश्चित्य मेधावी शुक्रं गत्वा न्यवदेयत् ।
तमागतं कविर्ज्ञात्वा संमानेनाभ्यनन्दयत् ॥ १६ ॥
तस्मै स विस्तरेणाह भार्य्याहरणमादितः ।
बृहस्पतेर्वचः श्रुत्वा कोपात् कविरथाऽब्रवीत् ॥ १७ ॥
तदा भोक्ष्ये तदा पास्ये तदा स्वप्स्ये तदा वदे ।
यदा नये प्रियां भ्रातस्तव भार्य्यां परार्दिताम् ॥ १८ ॥
एवमुक्त्वा स जीवाय दैत्याचार्य्यो जगाम ह ।
शिवमाराध्य यत्नेन परं सामर्थ्यमाप्तवान् ॥ १९ ॥
सजीवोऽथ ययौ शुक्रस्तारया यत्र चन्द्रमाः ।
वर्तते तं शशापोच्चैः शृणु त्वं चन्द्र मे वचः ॥ २० ॥
यस्मात् पापतरं कर्म त्वया पाप मदात् कृतम् ।
कुष्ठीभूयास्ततश्चन्द्रं शशापैवं रुषा कविः ॥ २१ ॥
कविशापप्रदग्धोऽभूत् कुष्ठरोगी स चन्द्रमाः ।
प्रापुः क्षयं न के नाम गुरुस्वामिसखिद्रुहः ॥ २२ ॥
तत्याज तां स चन्द्रोऽपि तारां नीत्वा कविस्तदा ।
पश्यतां सर्वदेवानां सत्कृत्य गुरवे ददौ ॥ २३ ॥

तदिदं प्राथमिकं तारापहरणम् । अत्र ताराया बृहस्पत्यन्तर्वेश्मावस्थानं चन्द्राक्रमणकालः । शुक्रो रुद्रश्चास्य पार्ष्णिग्राहावभूताम् । शुक्रस्तारां गृहीत्वा बृहस्पतये प्रत्यर्पयदिति विशेषो गम्यते ॥ १ ॥

अथायं गन्धर्वराजश्चन्द्रः पूर्वकृतस्नेहानुस्मरणात् तारासक्तचित्तस्तल्लाभार्थं चङ्क्रममाणः क्वचिदुद्यानगतामेतां तारामालोक्य बलादिव हस्ते गृहीत्वा स्वं गृहमानिनाय, बृहस्पतिना याच्यमानोऽप्यसौ चन्द्रो यदा नार्पयतिस्म, तदा बृहस्पत्यनुरोधाद् गणसैन्ययुतो रुद्रः सोमेन सह युध्वा विनाशं कर्तुमुद्यतोऽभूत्; तदानीं घोरसंग्रामायोजनं दृष्ट्वा पितामहः सोमं निरभर्त्सयत् । शशाप च । ततः पितामहवचनगौरवाच्चन्द्रोनिच्छन्नपि तारां बृहस्पतये ददौ । तदिदमुद्यानकालं तारापहरणमाख्यातं मात्स्ये त्रयोविंशे पाद्मसृष्टौ द्वादशाध्याये च—

कदाचिदुद्यानगतामपश्यदनेकपुष्पाभरणोपशोभाम् ।
बृहन्नितम्बस्तनभारखेदां पुष्पावभग्नेऽप्यतिदुर्बलाङ्गीम् ॥ १ ॥
भार्य्यां च तां देवगुरोरनङ्गबाणाभिरामायतचारुनेत्राम् ।
तारां स ताराधिपतिः स्मरार्तः केशेषु जग्राह विविक्तभूमौ ॥ २ ॥
साऽपि स्मरार्ता सह तेन रेमे तद्रूपकांत्या हृतमानसैव ।
चिरं विहृत्याथ जगाम तारां विधुर्गृहीत्वा स्वगृहं ततोऽपि ॥ ३ ॥
न तृप्तिरासीत् स्वगृहेऽपि तस्य तारानुरक्तस्य सुखागमेषु ।
बृहस्पतिस्तद्विरहाग्निदग्धस्तद्ध्याननिष्ठैकमना बभूव ॥ ४ ॥

शशाक शापं न च दातुमस्मै न मंत्रशस्त्राग्निविषैरशेषैः ।
तस्यापकर्तुं विविधैरुपायैर्नैवाभिचारैरपि वागधीशः ॥ ५ ॥
स याचयामास ततस्तु देवं सोमं स्वभार्यार्थमनंगततः ।
स याच्यमानोऽपि ददौ न तारां बृहस्पतेस्तत्सुखपाशबद्धः ॥ ६ ॥
महेश्वरेणाथ चतुर्मुखेन साध्यैर्मरुद्भिः सह लोकपालैः ।
ददौ यदा तां न कथंचिदिन्दुस्तदा शिवः क्रोधपरो बभूव ॥ ७ ॥
यो वामदेवः प्रथितः पृथिव्यामनेकरुद्रार्चितपादपद्मः ।
ततः सशिष्यो गिरिशः पिनाकी बृहस्पतेः स्नेहवशानुबद्धः ॥ ८ ॥
धनुर्गृहीत्वाजगवं पुरारिर्जगाम भूतेश्वरसिद्धजुष्टः ।
युद्धाय सोमेन विशेषदीप्तस्तृतीयनेत्रानलभीमवक्त्रः ॥ ९ ॥
तदास्त्रयुद्धं जगतां क्षयाय प्रवृद्धमालोक्य पितामहोऽपि ।
अन्तः प्रविश्याथ कथंचिदेतन्निवारयामास सुरैः सहैव ॥ १० ॥
अकारणं किं क्षयकृज्जनानां सोम ! त्वयापीदमकार्यकार्यं ।
यस्मात् परस्त्रीहरणाय सोम त्वया कृतं युद्धमतीव भीमम् ॥ ११ ॥
पापग्रहस्त्वं भविता जनेषु शान्तोऽप्यलं नूनमथो सितान्ते ।
भार्यामिमामर्पय वाक्पतेस्त्वं न चावमानोस्ति परस्वहारे ॥ १२ ॥
तथेति चोवाच हिमांशुमाली युद्धादपाक्रामदतः प्रशांतः ।
बृहस्पतिस्तामथ गृह्य तारां हृष्टो जगाम स्वगृहं च रुद्रः ॥१३॥ इत्या

ब्राह्मे सप्तमाध्यायेऽपीदमेवोक्तम्—(अग्नि० २७४ अध्यायेपि )

तस्य तत् प्राप्य दुष्प्राप्यमैश्वर्य्यमृषिसत्कृतम् ।
विबभ्राम मतिस्तात विनयादनया हृता ॥ १ ॥
बृहस्पतेः स वै भार्य्यामैश्वर्य्यमदमोहितः ।
जहार तरसा सोमोऽवमत्याङ्गिरसः सुतम् ॥ २ ॥
स याच्यमानो देवैश्च तथा देवर्षिभिर्मुहुः ।
नैव व्यसर्जयत् तारां तस्मै चाङ्गिरसे तदा ॥ ३ ॥
उशना तस्य जग्राह पार्ष्णिमाङ्गिरसस्य ह ।
रुद्रश्च पार्ष्णिं जग्राह गृहीत्वाजगवं धनुः ॥ ४ ॥
तेन ब्रह्मशिरो नाम परमास्त्रं महात्मना ।
उद्दिश्य देवानुत्सृष्टं येनैषां नाशितं यशः ॥ ५ ॥
तत्र तद्युद्धमभवत् प्रख्यातं तारकामयम् ।
देवानां दानवानां च लोकक्षयकरं महत् ॥ ६ ॥
तत्र शिष्टास्तु ये देवास्तुषिताश्चैव ये द्विजाः ।
ब्रह्माणं शरणं जग्मुरादिदेवं सनातनम् ॥ ७ ॥
तदा निवार्य्योशनसं तं वै रुद्रं च शंकरम् ।
ददावङ्गिरसे तारां स्वयमेव पितामहः ॥ ८ ॥

तदिदं द्वितीयं तारापहरणम् । तत्र तारायाः क्वचिदुद्यानप्रदेशेऽवस्थान चन्द्राक्रमणकालः । रुद्रश्च तस्य बृहस्पतेः पर्ष्णिग्राहो भूत्वा युद्धप्रवणोऽभूत् । ब्रह्मा तु तारां गृहीत्वा बृहस्पतये प्रत्यर्पयदिति विशेषा गम्यते ॥ २ ॥

पुराणान्तरे तु चन्द्रगृहे स्वयंगतायास्तारायाः अपहरणं स्मर्य्यते । तत्र चन्द्रगृहे प्रत्युपस्थानं चन्द्राक्रमणकालः । शुक्रस्तु तत्र सोमस्य पार्ष्णिग्राहोऽभूत् । अथ रुद्रो बृहस्पतेः । देवासुरयुद्धं चाभूत् । ब्रह्मा तत्र तारां गृहीत्वा बृहस्पतये प्रत्यर्पयत् इति विशेषो लभ्यते ॥ ३ ॥ तदित्थं त्रेधापहरणं सिद्धम् । परे त्वाहुः— एकधैवेदम-पहरणं, न त्रेधा । केनचिन्निमित्तेनाऽसंतुष्टतया रुष्टा तारा बृहस्पतिगृहे वस्तुमनिच्छ-न्ती चिन्तया क्वचिदुद्याने पर्य्यटन्त्यासीत्; तस्मिन्नेव समये गुरुदक्षिणादानाय ताराभिप्रायं ज्ञातुं बृहस्पतेरन्तर्वेश्मप्रविष्टेन चन्द्रेण तत्र तारानुपलम्भाद्बहिरन्विष्यता सा क्वचिदुद्याने दृष्टाभूत् । तत्र परस्परानुरागवशीकृता तारा चन्द्रसंमत्या स्वयमेव चन्द्रगृहमाजगामेत्येवं त्रिविधानामपि पुराणवचनानामैकार्थ्यं सपद्यते । यत्तु तारां क्वचिच्छुक्रः प्रददौ क्वचिद्वा ब्रह्मेति नायमात्यन्तिको विरोधः । ब्रह्मणः प्रधानत्वेऽपि शुक्रादीनामनुवर्तयितृत्वादुभाभ्यां तथा व्यवहर्तुं शक्यत्वात् । एवं युद्धायोजनसत्त्वे-ऽपि ब्रह्मणा निवर्तितत्वादिह युद्धं तदभावश्चेत्युभयथा शक्यते वक्तुम् । यत्त्वेकत्र शुक्रो बृहस्पतेः पक्षपाती बभूव, अन्यत्र तु सोमस्येति वैषम्यं दृश्यते तदैतिहासिकानां भ्रान्त्योपकृतं भवेत् शुक्रपार्ष्णिग्राहकतावैषम्यमात्रेण वृथा ताराहरणत्रैविध्यकल्पनाया अनौचित्यत् । तस्मादेकमेवेदं ताराहरणम् अत एवैतत्प्रमाणभूतायां वेदसंहिताया-मेकमेवेदमुपाख्यानं श्रूयते । तत्र तारायाः जुहूरिति नामाख्यायते ॥ अपि चात्र श्रुतौ देवासुरयुद्धं नाख्यायते किंतु केवलं कतिपये देवा महर्षयो मनुष्याश्च राजानः समेत्य सर्वे तत्र निर्णयं कृत्वा सोमापहृतां बृहस्पतिजायां बृहस्पतये दापयामासुरि-त्युच्यते । अपि च गन्धर्वदेशे महोदयनामराजधान्यां चन्द्राधिष्ठितायां गन्धर्वस्व-राज्यधुरन्धरा राज्यव्यवस्थापकसभासदोऽकूपारः, सलिलः, मातरिश्वा, वीडुहराः, राज्ञो लोकपाला आसन् । ते सर्वेऽप्यमुष्मिँश्चन्द्रकर्तृके ब्रह्मजायानिरोधे विक्षुब्धान्त-राः सन्तो विचारार्थं तत्र समितिं कृत्वा ब्रह्म-जायानिरोधसंबन्धे नवीनां व्यवहार-नीतिं निर्माय तत्र व्यवस्थापयामासुरिति विशेषः ॥ तथाहि ऋग्वेदसंहितायां दशमे मण्डले नवशतं सूक्तं तावदित्थमाम्नायते—( १० मं० १०९ सू० )

तेऽवदन् प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ।
वीडुहरास्तप उग्रो मयो भूरापो देवीः प्रथमजा ऋतेन ॥ १ ॥

प्रथमा इत्यग्रगण्या मुख्यत्वेन स्थापिताः । प्रथमजा इति प्रतिष्ठित-पुत्रा वयसा ज्येष्ठा वा । अकूपरादयस्तदानींतनानां देवविशेषाणां संज्ञाः । किल्बिषमपराधः । ऋतेन सत्येन । ऋतस्येति पाठान्तरमाथर्वणे दृश्यते । अयमत्राभिसन्धिः । बृह-स्पतिजायाया बृहस्पतिगृहे सत्याः कदाचिद्भोजनाच्छादनादिषु विषयान्तरे वा किञ्चित् कष्टमासीत् । तत्कृते दम्पत्योरन्योऽन्यं कलहे संप्रवृत्ते संरुष्टा सा जाया बृह-स्पतिं त्यक्त्वा पत्यन्तरचिकीर्षया सोमस्य गृहमाययौ । तत्रैतस्मिन् दम्पत्योः कलहे

वस्तुतः कस्यापराध आसीत् ब्रह्मणो वा जायाया वेति विचारप्रसङ्गे भगवान् वेदपुरुषः प्रथमामृचं प्राह । तत्र विचारार्थं प्रवृत्तेषु लोकेष्वग्रगण्या वृद्धा अकूपारादयो देवविशेषाः सत्येनाभिसन्धाय बृहस्पतेस्तत्रापराध इति पक्षेऽब्रुवन् न ब्रह्मपत्न्या अपराध इति पक्षे ।

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ २ ॥

अथ लोकमान्यः सोमो राजा स्वयमागतां ब्रह्मजायां गृहे नीत्वापि पश्चादागताय बृहस्पतये घृणामकृत्वा सौहार्दं प्रदर्श्य तां प्रायच्छत् । अत्रार्थे मित्रो वरुणोऽग्निश्चेति त्रयो देवा अनुवर्तयितार आसन् । यथेयं ब्रह्मजाया ब्रह्मगृहे गच्छेत् तथा यत्नमकुर्वन् । तत्रायमग्निदेवः सोमगृहेऽन्तर्निगूढां तां ब्रह्मजायां हस्ते गृहीत्वा बृहस्पतये दानाय बहिरानिनाय । इति ।

हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन ।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥

अथ सोमोऽयं गन्धर्वदेशे राजाऽऽसीदित्यन्यत्र श्रूयते । गन्धर्वेषु चान्योन्यानुरागमात्रेण दाम्पत्यव्यवहारप्रथासीत् । तदनुसारेण परस्परानुरागं निमित्तीकृत्य सोमेन तत्र ममैवेयं जाया न तु बृहस्पतेरित्येवं प्रख्यापिते यदा तस्या अन्वेषणाय पुनरानयनाय वा सोमगृहे बृहस्पतेर्दूतः पर्य्यधावत्, तदा सोमस्यैवेयं जाया; न त्वत्र ब्रह्मजायास्तीति ब्रुवद्भिः सोमद्वारपालैः स दूतः प्रत्याख्यातो न्यवर्तत । किन्तु पश्चात् स्वयं तत्रोपस्थितस्य बृहस्पतेः पार्ष्णिग्राहाणां मित्रवरुणाग्नीनां प्रयत्नेन यदा तस्याः सोमानुरक्ताया अपि पुराग्निसाक्षिकयाज्ञिकविवाहकर्मणा वैदिकसंस्कारपद्धत्या संपादितं बृहस्पतिपत्नीत्वमेव निरधार्य्यत, यदा वाऽग्निदेवस्तां हस्ते गृहीत्वा सोमगृहाद्बहिरानिनाय तदा बृहस्पतेः क्रोधाग्निरतितरां प्रज्वलितोऽभूत् । ममैवेयं जायेति वदतो गुरुदारापहारिणः सोमस्यापराधं निरूप्य स विक्षुब्धान्तरोऽभूत् । तस्मिन् प्रसङ्गे तस्य क्रोधं शमयितुं तत्र स्थिता देवास्तस्मै बृहस्पतये मन्त्रमूचुः । ब्रह्मन् ! यद्यत्र निर्णयार्थं प्रवृत्ताः सर्वे देवाः महर्षयश्चैकमत्येन ब्रह्मजायेयं, न सोमजायेत्यब्रुवन्; तदा त्वया नूनमस्या हस्तेनैव सह स्वीयोऽयमाधिरपि ग्राह्यः । इमां स्वहस्ते गृह्णन्स्तन्निबन्धनमाधिमपि स्वहस्ते गृहाण । आधिं संहृत्य संहृष्टः सपत्नीको गृहान् गच्छ; नातः परं क्रुद्धस्वेति भावः । सोमस्य हि दोषो नास्ति; एषा ते भार्यैव दूताय त्वया प्रहिताय संमुखतो न तस्थे । अथवा प्रह्ये प्रत्यावर्तनकर्मणि दूताय दूतसहगमनाय नैषोपतस्थे । प्रहेयेत्याथर्वणपाठे तु दूतसहगमनाय प्रहेया प्रत्या-वर्तनीयैषा न तस्थे इत्यर्थः । तेन ताराया एवायं दोषोऽस्ति ॥ गृहमागतायास्तु तस्या गृहे संरक्षणं क्षत्रियस्य धर्मो भवति । तथा कृते क्षत्रियस्य राष्ट्रं गोपितं भवति । अन्यथा त्वार्तानामाश्रयदानाभावादाश्रितपरित्यागाच्च राष्ट्रमरक्षितं विनश्येत । तस्मान्नैवं तारायाः संनिरोधे चन्द्रस्य दोषः संभवति इत्यर्थः ॥

देवा एतस्यामवदन्त पूर्वे सप्त ऋषयस्तपसे ये निषेदुः ।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ॥ ४ ॥

अपि च बृहस्पते ! देवाश्च सप्तर्षयश्च ये तपसे सत्यानुसन्धानायात्र निषेदुः ते सर्वे भवदागमनात् पूर्वं एतस्यां योषिति विषये भवितव्यमब्रुवन् । यदस्मिन् सोमकर्तृके ब्रह्मजायाहरणे पश्चात् भूयान् कलहः संभाव्यते इत्यतो भीमा भयंकरी परिणामे क्लेशकारिणी हीयं ब्राह्मणस्य जाया सोमेनोपनीताऽस्ति । तामेष सोमः परमे व्योम्नि त्रैलोक्येऽपि निगूहितुं दुःशक्यां गृहेषु धत्ते । महामहिम्नो हि ब्रह्मणो जायां न बहुतिथं स्वगृहे स्थापयितुं शक्नोति इति भावः । तपसेस्थाने तपसेति तृतीयापाठोऽस्त्याथर्वणे ॥

ब्रह्मचारी चरति वेविषद् विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद् बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ॥ ५ ॥

अथ परस्परानुरागनिबन्धनेन गान्धर्वेण विवाहप्रकारेणेयं सोमस्यैव जाया कस्मान्नाभ्युपेयते इति चेद् ब्रूयात् । तत्र देवा ब्रुवते एष बृहस्पतिः पुरा ब्रह्मचारी चरति, विवाहमकुर्वाण एवास्ते किंतु स पश्चात् विषो वेविषदिति यज्ञं यजमानो देवाना-मेकमङ्गं भवति । देवा हि स्वकर्तव्यं यज्ञमनेन कारयितुमस्मै पौरोहित्यम-ददुः । ततश्चैष यजमानानां देवानां प्रतिनिध्ये प्रतिष्ठापितो देवानां मुख्यमङ्गं भवति । अपत्नीकश्चार्द्धशरीरात्मा यज्ञं कर्तुं न शक्नोतीत्यतस्तेन देवानां यज्ञक-र्तृत्वेन हेतुना देवप्रेरितो बृहस्पतिपरिमां सोमोपनीतामेव योषितं जायामन्वविन्दत् देवा जुहूमिव । विवाहार्थमाहुतिप्रदानादिमे देवा यथा जुहूमन्वविन्दन् तथा चाग्निसाक्षिकयज्ञसंस्कारोपनीतस्य दाम्पत्यसम्बन्धस्य गान्धर्वोद्वाहेनापलापो न शक्यते कर्तुम् । गान्धर्वविवाहापेक्षया याज्ञिकविवाहस्य दृढबन्धनत्वात् प्राबल्यात् तस्मिन् पूर्ववृत्ते पश्चात् गान्धर्वविवाहप्रयोगायोगात् । तस्मादियं ब्रह्मजायैव न सोमजायेति सर्वेऽब्रुवन् ॥

पुनर्वै देवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥ ६ ॥

अथास्मिन् जायानिमित्ते विवादे निर्णयार्थं समुपेता देवर्षयो मनुष्या राजा-नश्च प्रातिस्विकसाक्ष्यदानेन सत्यं कुर्वन्तस्तां सोमात् प्रत्याकृष्य ब्रह्मणे प्रददुः । इमां ब्रह्मणो जायां मन्यामहे न सोमस्येत्येवं ते सर्वे प्रत्येकं सत्यमकुर्वन्निति ॥

पुनर्दाय ब्रह्मजायां कृत्वा देवैर्निकिल्बिषम् ।
ऊर्ज्वं पृथिव्या भक्तायोरुगायमुपासते ॥ ७ ॥ इति ।

समाप्तं ब्रह्मजायापहारचरिताख्यानम् । अतः परमेवं धर्मव्यवस्थादाने स्वानु-मतिं प्रदर्शयितुं वेदपुरुषस्तमर्थं प्रशंसति ; अन्येऽपि लोका एवंविधे ब्रह्मजाया-

विवादे प्रसक्ते देवैर्विद्वद्भिर्निःकिल्बिषं कृत्वा. अपराधं परिशोध्य, ब्रह्मजायां ब्रह्मणे पुनर्दत्त्वा पुनर्विवादोपशमनाय तस्यै योगक्षेमनिर्वाहोपयुक्तां पृथिव्यूर्जं संविभाज्य बह्वीं कीर्तिं भजन्ते। यदि कश्चित् पुरुषः स्वपत्न्यै भोजनाच्छादनादिकं न दद्यात् तदर्थं च कलहे यदि रुष्टा भार्य्या गृहं परित्यज्यान्यत्र गच्छेत् तदा तामानीय पत्युर्गृहे स्थापयेयुः । तन्निर्वाहयोग्यं तु पत्युः पृथिव्या आयं तस्यै पृथगिव दापयेयुः। न पृथ्वीमेव दापयेयुः । अबलायाः स्त्रियाः कृषिकर्माऽक्षमत्त्वात्। तदित्थं विवादे तच्छमनाय व्यवस्थां प्रवर्तयन्तो यशोभाजो भवन्तीति मन्त्रार्थः ॥

अथाथर्वणसंहितायामपि पञ्चमकाण्डे सप्तदशे सूक्ते तदिदं ब्रह्मजायापहरणमृग्वेदवदाम्नायते। किन्तु तत्रैतदुपाख्यानानन्तरं गान्धर्वराज्यव्यवस्थापकसभासद्भिरकूपारादिभिरष्टाभिर्लोकपालैर्देवमनुष्यराजैः कृता ब्रह्मजायापहरणसंबन्धिनी व्यवहारनीतिरपि एकादशभिर्ऋग्भिः प्रदर्श्यते। तथा हि—

यामाहुस्तारकैषा विकेशीति दुच्छुनां ग्राममवपद्यमानाम् ।
सा ब्रह्मजाया वि दुनोति राष्ट्रं यत्र प्रापादि शश उल्कुषीमान् ॥१॥
ये गर्भा अवपद्यन्ते जगद् यच्चापलुप्यते ।
वीरा ये तृह्यन्ते मिथो ब्रह्म जाया हिनस्ति तान् ॥ २॥
नास्य जाया शतवाही कल्याणी तल्पमा शये ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया चित्या ॥ ३ ॥
न विकर्णः पृथुशिरास्तस्मिन् वेश्मनि जायते ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया चित्या ॥४॥
नास्य क्षत्ता निष्कग्रीवः सूनानामेत्यग्रतः ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया चित्या ॥ ५॥
नास्य श्वेतः कृष्णकर्णो धुरि युक्तो महीयते ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया चित्या ॥ ६ ॥
नास्य क्षेत्रे पुष्करिणी नाण्डीकं जायते बिसम् ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया चित्या ॥ ७॥
नास्मै पृश्निं वि दुहन्ति येऽस्या दोहमुपासते ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया चित्या ॥ ८ ॥
नास्य धेनुः कल्याणी नानड्वान् सहते धुरम् ।
विजानिर्यत्र ब्राह्मणो रात्रिं वसति पापया ॥ ९ ॥
उत यत् पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः ।
ब्रह्मा चेद्धस्तमग्रहीत स एव पतिरेकधा ॥ १० ॥
ब्राह्मण एव पतिर्न राजन्यो न वैश्यः ।
तत् सूर्य्यः प्रब्रुवन्नेति पञ्चभ्यो मानवेभ्यः ॥ ११ ॥ इति ॥

अत्र सूक्ते तस्या ब्रह्मजायायास्तारेति विकेशीति च नामद्वयमधिकं लभ्यते। ग्राममागतां दुच्छुनां शून्यस्थानत्वापादकजनपदविध्वंसनीयदुःशकुनरूपां यामि-

मामपहृत्य गृहेऽवरोधितां ब्रह्मजायां तारका विकेशीत्याहुः। मा ब्रह्मजाया संपूर्णं राष्ट्रमुपतापयति। कीदृशं तदुपतापनमिति चेदुच्यते राष्ट्रे ये गर्भा अवपद्यन्ते गर्भपाता भवन्ति- गर्भे वा शिशवो म्रियन्ते, यच्च जगदपलुप्यते। मनुष्यमृत्यवो भवन्ति। चौर्य्यं वा भवति गृहादिकं पतति। भूकम्पाद्याघातात्कश्चन भूमिभागो रसातलं याति। ये वा वीराः परस्परं विद्रोहाद्ध्रिसन्ति। एतत्सर्वं ब्रह्मजायापहरणदोषादेव संभवति। अत्र राष्ट्रे निरुद्धैषा ब्रह्मजायैव तान् सर्वान् हिनस्तीति विद्मः। यस्मिन् राष्ट्रे ब्रह्मजाया चिन्तया शोचन्ती चिन्तया शोच्यमाना वा निरुध्यते तत्र राष्ट्रे स्त्रियः सुखं न शेरते न वीरा जायन्ते, न क्षेत्रे साध्वन्नमुत्पद्यते, न वृषो बलवान् भवति। यदि क्षत्रियो राजा बलादिव ब्रह्मजायां स्वान्तः पुरे निगृह्णीयात् स्वस्त्रियं च कुर्य्यात्, तत्पतिश्च ब्राह्मणस्तदर्थं यदि निःस्त्रीकतया चिंतया परिक्लिश्नाति, तदास्य राज्ञो राष्ट्रं नश्यतीत्यर्थः॥ इति राजकीयस्वेच्छाचारिताकर्मसमालोचनात्मकं गन्धर्वदेशीयं लोकसभामतमथर्ववेदे प्रदर्शितम्।

अथ द्वाभ्यां धर्मनीतिव्यवस्थां कल्पयन्ति। अब्राह्मणस्त्रियाः दशवारं पुनर्विवाहाः शक्यन्ते कर्तुम्। ब्राह्मणस्त्रियास्त्वेक एव पतिः स्यान्नत्वस्याः द्वितीयो भर्ता स्यात्। अब्राह्मण्या ब्राह्मणः पतिः संभवति, क्षत्रियादिरपि। ब्राह्मण्यास्तु ब्राह्मण एव पतिर्न क्षत्रियो वैश्यो वा। "पञ्चभ्यो मानवेभ्यः"—इत्येवमुक्ताः; पञ्च मानवास्तु—ऋषयः पितरो देवासुराः तैर्य्यग्योना मनुष्याश्चेत्येवं द्रष्टव्याः। सर्व एव पृथिव्यां नराः पुरा देवयुगे एतैरेव पञ्चभिर्विभागैर्विभक्ता आसन्। त एव पञ्चजनाः पञ्च कृष्टयश्चोच्यन्ते स्म। नागसुपर्णादिसंज्ञाभिः प्रसिद्धा नरजातयस्तैर्य्यग्याना उच्यन्ते। गन्धर्वयक्षादयस्तु देवयोनयो देवेष्वेवान्तर्भाव्यन्ते इति नाव्याप्तिः॥ तथा चैतासु पञ्चस्वपि मानवजातिष्वियं व्यवस्था क्रियते इति तात्पर्यम्। गन्धर्वजातीया गन्धर्वाणां राजाऽयं सोमो यद्यपि ब्राह्मणानामपि राजाऽसीत् "सोमोऽस्माकं ब्राह्मणानां राजेति" मन्त्रश्रवणात्। तथापि न त्वेष स्वयं ब्राह्मण आसीदित्ययमर्थो अथर्ववेदे ब्रह्मजायाया अब्राह्मणः पतिर्न संभवतीत्येवमृषिसमाजे सत्योपालम्भनादवगम्यते॥ तथा च राज्यभाक्त्वादयं सोमः क्षत्रियः प्रत्येतव्यः। इत्थं च सभायां सत्यं कुर्वद्भिः सदस्यैर्देवैर्ऋषिभिश्च व्यवस्थाय ब्रह्मजायापहरणं राज्ञाकृतं भर्त्सयामासुः। राज्ञा च लोकमतानुसारादेव वर्तितव्यं, न तु लोकमतविरुद्धमित्यत एव च राज्ञा सा ब्रह्मजाया पुनर्ब्राह्मणे प्रत्यर्प्यतेति बोध्यम्। तदित्थमिदं ताराहरणोपाख्यानमस्मिन् सूक्ते निर्दिष्टं भवति।

परे त्वाहुः—मनुष्यविधस्य बृहस्पतेस्तारां नाम मानुषीं पत्नीं मनुष्यविधः कश्चन चन्द्रोऽपजहारेत्यर्थोऽस्य ताराहरणोपाख्यानस्य तात्पर्य्यं नोपनेयम्! गुरुपत्न्यपहरणकर्मणोऽत्यन्तनिकृष्टकर्मतया तादृशकर्मकर्तृत्वेन चन्द्रस्य कलङ्कयितुमनर्हत्वात्। वस्तुतस्तु वेदसंहितान्नातोपाख्यानानां वैज्ञानिकतयैतस्मात् ताराहरणोपाख्यानात् खचारिणोर्बृहस्पतिचन्द्रयोर्ग्रहयोर्नक्षत्रभोगसम्बन्धि किञ्चिद् वैज्ञानिकं रहस्यं विज्ञातं भवति न तु मनुष्यचरितम्। तथा हि-पञ्चविधं तावन्नक्षत्रं भवति—[1] तारानक्षत्रं, [2] ताराव्यूहनक्षत्रं, [3] खदेशनक्षत्रं, [4] गतिनक्षत्रं, [5] सांपातिकनक्षत्रं

चेति । तेषु वासन्तसंपातारब्धप्रात्यहिकचन्द्रगत्यवच्छिन्नप्रदेशात्मकं हि संपातिक-नक्षत्रं तदष्टाविंशतिसंख्यम् । तच्च संपातबिन्दोरस्थिरतया नातीवोपयुक्तमित्यु-पेक्ष्यते ॥ ५ ॥ अथाभिजित्पूर्वपार्श्वत आरभ्य प्रात्यहिकन्यूनाधिकगत्या गच्छँश्चन्द्रः सप्तविंशतिदिनैः २७, ऊनविंशतिदण्डैः १९, सप्तदशपलैः १७, सप्तपञ्चाशद्विपलैः ५८, एकत्रिंशत् प्रतिविपलैः ३१, सर्वां पृथ्वीं परिक्रम्य पुनः प्राक्तनं स्थानमाया-

दि० घं० मिं० से०

तीति नियमो दृश्यते ( २७ । ७ । ४३ । ११, ५ ) तथाचैवं प्रात्यहिकगत्यवच्छिन्ना अष्टविंशतिविभक्ता आकाशप्रदेशाः श्रवणादीनि गतिनक्षत्राण्युच्यन्ते । ते च प्रदेशा न्यूनाधिकाः स्युः । सर्वापेक्षया चाभिजिन्नक्षत्रप्रदेशोऽत्यल्पमात्रः संपद्यते । पूर्णा-होरात्रगत्यनवच्छिन्नत्वात् ॥ ४ ॥ अथ रेवत्यन्तांशः कोपि स्थिरबिन्दुर्नियस्यते । तत आरभ्य क्रान्तिवृत्तौ कलाष्टशत्यवच्छेदेन क्लृप्तास्तुल्याः सप्तविंशतिविभागा एव स्वदेशनक्षत्राणि । तान्यारम्भकबिन्दोः स्थिरत्वादविचालीनि ॥ ३ ॥ अथैषामेव देशनक्षत्राणां स्थानपरिचयार्थं तत्तत्प्रदेशस्थैस्तारापुञ्जैर्यथासंभवं मूर्तयोऽश्विनी-भरणीकृत्तिकादयः प्रकल्पिता अभवन् । अश्वमुखाकृतिरश्विनी । मधुमक्षि-काकृतिर्मधुकोशाकृतिर्वा भरणी । कृत्ता शस्त्रविशेषः । इत्येवमुत्तरा अप्यूह्याः । एषां तारापुञ्जानामन्वक्षतया तदुपलक्षिता द्युप्रदेशा अप्यञ्जसा विज्ञाता भवन्ति ता एतास्तारापुञ्जकल्पिताकृतयः समप्रदेशनक्षत्राणामिव विषमप्रदेशनक्षत्राणामपि बोधिकाः संभवन्ति । नक्षत्रबोधकत्वाच्चैषामपि ताराव्यूहानां नक्षत्रसंज्ञा । तेषु च व्यूहेषु एकैका योगतारा भवति । सैव मुख्या नक्षत्रताराऽध्यवसीयते ॥ २ ॥ एवमेकैकताराणामप्यचलानां नक्षत्रसंज्ञा क्रियते । न क्षरतीति व्युत्पत्तेरास्वेव तारासु नक्षत्रशब्दो मुख्यः ततस्ताराव्यूहेषु प्रदेशेषु च समविषमेषु भाक्तः प्रवर्तते ॥ १ ॥ प्रतिनक्षत्रवर्तिस्थूलतारोपपन्नं ज्योतिस्तु तत्तन्नक्षत्रदेवतामुपकल्पयन्ति । तद्यथा—

भेशाः क्रमादश्वियमाग्निधातृक्षपेशरुद्रादितिजीवसर्पाः ।
पिता भगश्चार्यमकश्चसूर्य्यस्त्वष्टा च वायुश्च सहेन्द्रवह्नी ॥ १ ॥
मित्रेन्द्ररक्षांसि जलं च विश्वे ब्रह्मा च विष्णुश्च वसुर्जलेशः ।
अजैकपादप्यहिबुध्न्य एवं पूषेति बोध्याःक्रमतोऽश्विनीतः ॥ २ ॥

तथा च पुष्यतारायाः स्वामी बृहस्पतिः सिध्यति । सोयमर्वाचां संप्रदाये लुब्धकबन्धुर्नामोच्यते । तस्यैव पुष्यस्थानीयस्थूलज्योतिष्ट्वात् । बृहस्पतित्वं च तस्य मन्त्रश्रुतिस्वारस्यादुपपद्यते । तथा हि—

"स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु"—

इति मन्त्रे खमण्डलस्य चत्वारि केन्द्रस्थानानि दर्श्यन्ते । वृद्धश्रवा इन्द्रश्चि-त्राख्यतारारूपः कौशिकमूर्तिः । ततः षड्भान्तरे रेवत्याख्यताराखूपः पूषादेवः । अथ नवत्यंशान्तरे श्रवणाख्यतारापुञ्जरूपः सुपर्णमूर्तिस्तार्क्ष्यः । त्रयाणामृक्षाणां

समाहारस्तृक्षं यलोपश्छान्दसः । तत्कल्पितः पक्षी तार्क्ष्यः । ततः पड्भान्तरे बृहस्पतिरित्याह । स च तत्रान्यसंभवाल्लुब्धकबन्धुरेव सिध्यति ॥ द्विविधा हि चन्द्रबृहस्पत्यादयो नामाख्यायन्ते । चराः स्थिराश्चेति । चरा ग्रहाः प्रसिद्धाः ॥ स्थिरेषु चन्द्रो मृगशीर्षनक्षत्रे स्थूलतारात्मको दृश्यते । एवमयं पुष्ये लुब्धकबन्धुः स्थिरो बृहस्पतिर्नाम । स हि पुष्यतारास्वामी भवति । कृत्तिकारोहिणीपुष्यामघाचित्रादीनां कतिपयनक्षत्रयोगताराणां चन्द्राच्छाद्यत्वसिद्धान्तादेतामपि बृहस्पतिस्वामिकां पुष्यतारामयं चन्द्रश्चरन् कदाचिदाच्छादयति । तत्राहनि बृहस्पतिगृहं गतश्चन्द्रो एवैतां तारां भुङ्क्ते । बृहस्पतिसहचरो मृगव्याधश्चात्र रुद्रो बृहस्पतिपक्षपात भवति स चन्द्रमसा युध्यन् खरत्वाद्बलवत्त्वाच्च तद्बलमपकर्षयति ॥ तदेतदेवं पश्यन्त आचार्य्याः कौतुकादिवेदं ताराहरणोपाख्यानमुपकल्पयन्तिस्म ॥ इत्येकःकल्पः॥१॥

अपि च—पुनर्वस्वेकपादसहिते पुष्यश्लेषे कर्कराशिर्भवति । स च बृहस्पतेरुच्चराशिर्नियम्यते ॥

"मेषो वृषोऽथ मकरः कन्या कर्को झषस्तुला ।
सूर्य्यादीनामुच्चभानि तेष्वेते बलिनो ग्रहा" इत्यभियुक्तोक्तेः ॥

तत्रापि पञ्चमांशरूपं पुष्यादिपादमध्यं परमोच्चस्थानं प्राहुः ॥ अथ पुनरस्यैव कर्कस्य चन्द्रः स्वामी भवति ।

"राशिनाथाः क्रमेणाहुः शनिर्मकरकुम्भयोः ।
धनुर्मीनपतिर्जीवो मेषवृश्चिकयोः कुजः ॥ १ ॥
शुक्रो वृषतुलस्वामी कन्यामिथुनयोर्बुधः ।
कर्कस्वामी चन्द्र एवं सिंहस्वामी रविःस्मृतः॥२॥" इत्यभियुक्तोक्तेः ।

तथा च बृहस्पतिविलासस्थानस्य तारामयस्य चन्द्रस्वामिकत्वोपपादनात् तादृशप्रतिपत्त्याधारेणापीदं ताराहरणोपाख्यानमुपक्लृप्तं भवति ॥ २२ ॥

अपि च—अयं खलु बृहस्पतिर्द्वादशभिः संवत्सरैः संपूर्णं भमण्डलं भुङ्क्ते । तावता कालेनायं सूर्य्यः साधिकद्वादशवारं परिक्रममाणो भवति । तथा च सूर्य्येणान्तर्हितो बृहस्पतिरस्तं गत्वा यदि कृत्तिकायामुदयं गतः संवत्सरकालं दृश्यते । तदासौ कार्तिको नाम संवत्सर उच्यते । पुनरस्तं गत्वा मृगशीर्ष्णयुदितो मार्गशीर्षं संवत्सरं कुरुते । एवं क्रमेण पौषमाघादयः संवत्सराः स्युः । द्वादशभिर्मासैरेकं चान्द्रवर्षमिव द्वादशभिर्वर्षैरेकं बार्हस्पत्यं वर्षं भवति । पञ्चभिश्चान्द्रवर्षैरेकं चान्द्रयुगमिव च पञ्चभिर्बार्हस्पत्यवर्षैरेकं षष्टिवर्षात्मकं बार्हस्पत्ययुगं भवति । क्षयमासाधिकमासवच्चेहापि लुप्ताब्दाधिकवर्षे भवतः । सेयमित्थं कृता सर्वा कालव्यवस्था पुरातनैर्गणितपण्डितैरादौ बृहस्पतिसूर्य्यसंबन्धेनैव दृष्टासीत् । तेनादौ बृहस्पतिसंबन्धेनैव कार्तिकादिनामानो नक्षत्रोपलक्षिताः कालविभागा उपक्लृप्ता आसन् ।

अत एवायं बृहस्पतिरेव तदानीं सर्वनक्षत्रतारास्वामितयादौ निर्णीतोऽभूत। किन्तु तत्पश्चात् कालक्रमेण सेयं सर्वा कालव्यवस्था सूर्य्यचन्द्रसंबन्धेनापि दृश्यते स्म। ततो बृहस्पत्यपेक्षया चन्द्रसंबन्धादेवैते कार्तिकादिनामानः कालविशेषास्तत्तद्गणितव्यवस्थाश्रयत्वे सुप्रसिध्यन्ति॥ तेन बृहस्पतिभुक्तास्ताराः पश्चाच्चन्द्रभुक्ता अभूवन्नित्येतमेवार्थमुपलक्ष्यैतत्ताराहरणोपाख्यानमुपकल्पयामासुरिति पश्यामः॥ ३॥

अत्रोच्यते—संभवत्येवमिदमाधिदैविकं विज्ञानं किन्तु नैतावता मनुष्यचरितं नाभूदिति शक्यं वक्तुम्। आधिभौतिकार्थगर्भितानामेव सतामाधिदैविकानामाध्यात्मिकानां वार्तानामितिहासविधयोपपादनस्य वेदे भूयसा दृष्टत्वात्—"तदुक्तं विज्ञानभाष्ये"—

यथा दुग्धं च भक्तं च शर्करा च सुमिश्रितम्।
कल्पितं देवभोगाय परमान्नं सुधोपमम्॥ १॥
तथा त्रैविध्यमापन्नः श्रुतिभेदः सुखात्मकः।
नयते ब्राह्मणान्नित्यं ब्रह्मानन्दं परात्परम्॥ २॥ इति॥

युक्तं चैतत्—अन्यथा तत्राकूपारसलिलमातरिश्वादीनां राजमन्त्रिणां समितिपूर्वकं ब्रह्मजायापहरणविषयकव्यवस्थाकरणमृग्वेदाथर्ववेदोल्लिखितमानर्थक्यादुव्याकुप्येत। यत्त्वेवं सत्यपौरुषेयानादिवेदस्य सादित्वं पौरुषेयत्वं च प्रसज्येतेति केचिदाक्षिपन्ति तदसत्। आधिदैविकविज्ञानमात्रत्वोपपादनेऽपि तादृशार्थानां जगदन्तर्गतत्वाज्जगत्सृष्ट्यपेक्षयापि पूर्वस्मिन् वेदे तदुल्लेखायोगात् तावतापि वेदसादित्वाक्षेपस्य तादवस्थ्यात्। भविष्यदर्थोपपादनं वेदेऽस्तीति चेन्मनुष्यचरितस्यापि भविष्यदर्थस्य तत्रोपपादनं संभवतीति तुल्यमेतत्। वस्तुतस्तु विज्ञानार्थकस्य विद्यारूपस्य वेदस्यापौरुषेयानादित्वसिद्धान्तेऽपि तादृशार्थोपपादकवेदग्रन्थात्मकस्य वेदस्य मनुष्यरचितत्वेनैवपपादितत्वोदश्रद्धेय एवायमाक्षेप इति विरम्यते॥ यत्तु चन्द्रस्य गन्धर्वराजस्य तादृशदुराचरणकर्तृत्वं नोपपद्यते इत्याहुस्तदप्यसत्। सदाचारदुराचारयोर्मनुष्येषु स्वाभाविकतया प्रवर्त्तमानत्वात्। ऐतिहासिकैश्च यथाभूतवृत्तान्तप्रदर्शकैरापामरमादेवराजं च व्यक्तिगतनिकृष्टत्वोत्कृष्टत्वादिपक्षपातानपेक्ष्यैव प्रवर्तमानैः सम्राजोऽपि चन्द्रस्य दुराचरणादिदोषाणामवश्यप्रदर्शनीयत्वात्। महामहिमभाजोऽप्यस्य चन्द्रस्य गुरुदारापहरणादिमहापातकसंबन्धादस्मिन्नेव जन्मनि कुष्ठरोगपीडाग्रस्तत्वं स्मर्य्यते। अन्ते चायं चन्द्रो राजयक्ष्मणा महारोगेणाक्रान्तो गन्धर्वनगरे एव प्राणांस्तत्याज। अत्युग्रपुण्यपापानामिहैव जन्मनि फलोदयसंभवात्॥ तथाहि—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते॥ १॥
धर्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः॥

इति हि धर्मसूत्रकाराः स्मरन्ति। तथा चैतद्धर्म्माचरणप्रभावादेवायं चन्द्रः पूर्वं यथा परमैश्वर्य्यमुपलेभे तथैवायं पश्चाद्धर्म्मविध्वंसनात् परमं कुष्ठरोगक्षयरो-

गादिकष्टमाससादेति गम्यते ॥ अतएव च परमैश्वर्य्यप्राप्तावपि ततो मदमानमोह-दम्भाहङ्काराद्यनर्थास्पृशद्भिः सदाचारमाचरद्भिः सदा धर्म एवाश्रयणीयो नाधर्म्मः। धर्म्म एव हि सर्वेषामभ्युदयाय संपद्यते।

तस्यैतस्य चन्द्रस्य जन्माद्याख्यानं प्रशस्यते ब्राह्मे—(७)—

एतत् सोमस्य वो जन्म कीर्तितं कीर्तिवर्द्धनम्।
धन्यमायुष्यमारोग्यं पुण्यं संकल्पसाधकम् ॥ १ ॥
सोमस्य जन्म श्रुत्वैव पापेभ्यो विप्रमुच्यते।
वंशमस्य मुनिश्रेष्ठाः! कीर्त्यमानं निबोधत ॥ २ ॥

॥ इति चन्द्रराजचरितं समाप्तम् ॥

—०—

## बुधः ४

अस्य चन्द्रस्य बुधः पुत्र आसीत्। स च बृहस्पतेः पत्न्यां तारायां चन्द्र-वीर्य्यादुदपद्यत। तथा हि गुरुपत्नीमिमां तारां गृहीत्वाऽयं चन्द्रो रुद्रशुक्रादि-प्रवर्तितस्य तारकामययुद्धस्यानन्तरं यदा ब्रह्मपितामहवचनात्पुनर्बृहस्पतये प्रत्यर्पयत् तदानीमियं तारा गर्भवत्यासीत्। बृहस्पतिवचनाच्चेयं तारा तं गर्भमिषीकास्तम्बे तत्याज। ततोऽतिसुन्दरं पुत्रं दृष्ट्वा गृध्यमानस्तं बालं ग्रहीतुकामो बृहस्पतिः पितृ-वज्जातकर्मादिसंस्कारं कर्तुमैच्छत्॥ तच्छ्रुत्वा परिक्रुद्धश्चन्द्रः स्वपुत्रं नेतुं तत्रागत्य पुनर्युद्धाय ससज्जे।"न चायं तवपुत्रोस्ति मम वीर्य्यसमुद्भवः। जातकर्मादिकं कार्यं कथं त्वं कृतवानसि"—इत्येवं चन्द्रेणाक्षिप्तो बृहस्पतिरूचे—क्षेत्रिणः पुत्रो भवतीति धर्मव्यवस्थानादयमनुरूपो ममैव पुत्रः संभवति न तवेति। तदित्थं पुनर्विवादःसंजातः। युद्धार्थं पुनरागतानां देवदानवानां समरोद्योगे महानिव संरम्भः समभूत्। ततोऽमुं युद्धं शमयितुमुपस्थितो ब्रह्मा तारावचनादस्य बालकस्य चन्द्रपुत्रत्वं निर्णीय चन्द्रायैनं समर्पयामास। अथ चन्द्रस्तं गृहीत्वा 'बुध' इति नामकरणं चक्रे। तदुक्तं ब्राह्मे—

"तामन्तः प्रसवां दृष्ट्वा क्रुद्धः प्राह बृहस्पतिः।
मदीयायां न ते योनौ गर्भो धार्य्यः कथंचन ॥ १ ॥
इषीकास्तम्बमासाद्य गर्भं सा चोत्ससर्ज ह।
जातमात्रः स भगवान् देवानामक्षिपद्वपुः ॥ २ ॥
ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः।
सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः ॥ ३ ॥
पृच्छ्यमाना यदा देवैर्नाह सा विबुधान् किल।
तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः ॥ ४ ॥

तं निवार्य्य तदा ब्रह्मा तारां पप्रच्छ संशयम् ।
यदत्र तथ्यं तद् ब्रूहि तारे ! कस्य सुतोस्त्ययम् ॥ ५ ॥
उवाच प्राञ्जलिः सा तं सोमस्यैति पितामहम् ।
ततः पितामहो ब्रह्मा ददौ सोमस्य बालकम् ॥ ६ ॥
तदा तं मूर्ध्नि चाघ्राय सोमो राजा प्रजापतिः ।
'बुध' इत्यकरोन्नाम तस्य बालस्य धीमतः ॥ ७ ॥
प्रतिकूलं च गगने समभ्युत्तिष्ठते बुधः ।
उत्पादयामास तदा पुत्रं वै राजपुत्रकम् ॥ ८ ॥ इति ॥

आग्नेये तु बुधोऽप्यात्मानं सोमपुत्रत्वेनाभ्युपजगामेत्याह ( २७४.अ० )

तामन्तःप्रसवां दृष्ट्वा गर्भं त्यजाब्रवीद्गुरुः ।
गर्भस्त्यक्तः प्रदीप्तोऽथ प्राहाहं सोमसंभवः ॥

यद्यपि क्षेत्रिणः पुत्रो भवति न बीजिन इति मानवं धर्मशास्त्रमस्ति—"तथैवाक्षत्रिणो बीजं परक्षेत्रप्रवापिणः । कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम्॥९।५१॥ फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो बीजाद् योनिर्गरीयसी ॥९।५२॥ क्रियाभ्युपगमात् त्वेतद्बीजार्थं यत्प्रदीयते तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥९।५३॥ ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति । क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥ ९ । ५४ ॥ इति मनुस्मरणात् ॥ तथापि तस्या धर्मनीतेर्मनुष्याधिकारेण विहिताया गन्धर्वेष्वनधिकारात् प्रजापतिवचनाच्चासौ बुधः सोमस्यैव पुत्रः प्रत्यपद्यत । न त्वस्य बृहस्पतेः । यद्येष बृहस्पतिपुत्रोऽभविष्यत् स तर्हि ब्राह्मणोऽभविष्यत् । सोमपुत्रत्वाच्चैष बुधो गन्धर्वाणां राजपुत्रः क्षत्रियः समपद्यतेति बोध्यम् ॥ चन्द्रस्तं बुधं नीत्वा ज्येष्ठत्वान्मुख्यायै स्वधर्मपत्न्यै रोहिण्यै समर्पयामास । ततोऽसौ बुधो रौहिणेय इत्युच्यते ॥ यत्तु वायुपूर्वार्धे द्वितीयाध्याये नैमिषक्षेत्रमाहात्म्ये "यत्र सा गोमती पुण्या सिद्धचारणसेविता । रोहिणी सुषुवे तत्र ततः सौम्योऽभवत् सुतः" इति नैमिषक्षेत्रे रोहिण्या गर्भे बुधजन्मोक्तं, तेन तत्रैव रोहिण्यै समर्प्य जातसंस्कारविधानं प्रतीयते । रोहिण्याः पुत्रत्वेन प्रख्यानस्यैव ततः प्रसवत्वेनाभिप्रेतत्वात् । न तु वस्तुतस्तस्य रोहिण्या गर्भे जन्मासीत् । ताराहरणोपाख्यानविरुद्धत्वात् ॥ गन्धर्वदेशादतिदूरदेशे नैमिषक्षेत्रे जातसंस्काराय गमने को हेतुरिति चेत् तत्र ब्रूमः—चन्द्रगृहादानीतायास्तारायाः शुद्ध्यर्थं गौतम्यां गङ्गायां प्रायश्चित्तार्थमागमनं तावदुक्तं ब्राह्मे गौतमीमहात्म्ये—

ततः श्रुतिः सुरानाह गौतम्यां भक्तितस्त्वियम् ।
स्नानं करोतु जीवेन तारा पूता भविष्यति ॥ १ ॥
तथाकरोच्च वै तारा भर्त्रा स्नानं यथा विधि ।
तदभूत् सकलाघौघध्वंसनं सर्वकामदम् ॥ २ ॥" इति ॥

तथा च गौतमीस्नानोत्तरमेव गोमतीतीरेऽपि नैमिषक्षेत्रे गतया तारयैव गुरुवचनाद्गर्भत्यागे तत्रैव स्वपुत्रं ग्रहीतुं चन्द्रस्यागमनं संभाव्यते। तत्रैव च नचिराच्चन्द्रेण जातसंस्कारादिकरणमपि संभाव्यते इति विज्ञेयम्॥

अनेन हि बुधेन सर्वप्रथमं हस्तिशास्त्रं निर्माय लोके प्रवर्तितमिति मात्स्ये चतुर्विंशेऽध्याये पाद्मे सृष्टिखण्डस्य द्वादशाऽध्याये च स्मर्यते॥

तारोदराद्विनिष्क्रान्तः कुमारश्चन्द्रसन्निभः।
राज्ञः सोमस्य पुत्रत्वाद्राजपुत्रो बुधः स्मृतः॥ १॥
सर्वार्थशास्त्रविद्धीमान् हस्तिशास्त्रप्रवर्तकः।
स चक्रे राजपुत्रीयं विश्रुतं गजवैद्यकम्॥ २॥

यद्यपि पालकाप्यमुनिना प्रणीतमेकं गजशास्त्रमिदानीमुपलभ्यते; न तु बुधप्रणीतं राजपुत्रीयं गजशास्त्रमद्यत्वे क्वापि प्रसिद्ध्यति। तथापि सर्वतः पूर्वमिदं गजविज्ञानं गन्धर्वदेशे बुधनैव राजपुत्रेण प्रदर्शितमिति पुराणपर्य्यालोचनादवगम्यते। कालदोषाच्च तन्नष्टप्रायं संभाव्यते। एवमपि चन्द्रराजपुत्रस्य बुधस्य तादृशापूर्वविद्योद्भावकत्वेन निरतिशयमनीषागाम्भीर्य्यं सुव्यक्तमुपपद्यते॥

गन्धर्वराजपुत्रत्वाच्चैतस्य बुधस्य 'राजपुत्र' इति नामान्तरं भवति॥ एतद्वंशजातत्वादेव तु चन्द्रवंश्यानां क्षत्रियाणां राजपुत्रसंज्ञा प्रथमं प्रवृत्ता। सा पश्चात् सर्वविधक्षत्रियजातिविषयतया निर्विशेषमज्ञानात् प्रववृते इति संभाव्यते॥

स एव बुधो राजपुत्रोऽत्यन्तं विद्वान् सुन्दरश्चासीत्। हास्यप्रियो बालवच्चपलप्रकृतिरत्युद्धतश्चासीत्। स कदाचिन्मृगयां गतः कुमारवनोपान्त्यप्रदेशमाजगाम। तदानीं तस्य वेषमाह: पाद्मे सृष्टिखण्डाष्टमे॥

"विशिष्टाकारवान्मुण्डी सकमण्डलुपुस्तकः।
वेणुदण्डकृतावेशः पवित्रकखनित्रकः॥ १॥
द्विजरूपः शिखी ब्रह्म निगदन् कर्णकुण्डली।
बहुभिश्चार्थिभिर्युक्तः समित्पुष्पकुशोदकैः॥ २॥

स हि तत्र वनोपान्त्यप्रदेशे कांचिदेकाकिनीं नवयौवनसंपन्नां स्त्रियमकस्मादपश्यत्॥

---

# ( इला )

केयमासीदिति जिज्ञासायामस्याः परिचयमत्र मतभेदेन वक्ष्यामः।

इयमिला नाम्नी राजकुमारी प्रतिष्ठानपुराधिष्ठातुः सुद्युम्नस्य महाराजस्य ज्येष्ठा भगिन्यासीदिति तावदेके व्याचक्षते।

तथाहि—पुरा देवलोके द्वादशादित्या नाम देवजातिविशेषाः सूर्य्यापरनामानः केचिदासन्। तेषु विवस्वान् नामैको देवानां कुलविशेषः प्रसिध्यति स्म। तत्र कस्यचिद्विवस्वतः सूर्य्यापरनाम्नः श्राद्धदेवो यमश्चेति द्वौ पुत्रौ बभूवतुः। ब्रह्मणः प्रसादात्तु तयोरयं श्राद्धदेवो मनुरभवत्। यस्याधिष्ठातृत्वे मानुषी प्रजा ध्रियते। स प्रशास्ता मूलपुरुषो मनुरित्युच्यते। मनुरिति यमस्य मनुष्यप्रजाशासकत्वनिबन्धना भवत्याधिकारिकी संज्ञा। यथा चायं मनुर्मनुष्यलोकानामध्यक्ष आसीत्। एवमयं यमोऽप्यन्यो वैवस्वतः पितृलोकानामधिष्ठाताऽऽसीत्। तथा च परिप्लवश्रुतौ श्रूयते- "मनुर्वैवस्वतो राजा। तस्य मनुष्या विश आसते इत्यश्रोत्रिया गृहमेधिन उपसमेता भवन्ति। यमो वैवस्वतो राजा। तस्य पितरो विशः। त इम आसते इति स्थविरा उपासमेता भवन्ति"—इति॥ गृहमेधिनाम श्रोत्रियत्त्वमेव च तदानीं ऋषिपितृदेवतिर्य्यङ्मनुष्यात्मकेषु पञ्चविधमानवेषु मनुष्याणां लक्षणमासीदित्यप्यनया श्रुत्यावगम्यते। तेषां च मनुष्याणां लोको भरतखण्डे खल्विरावतीनिर्गमस्थानाद्दक्षिणभूभागः सर्वोऽपि पुरा युगे नियत आसीत् इति पुराणे निर्धार्य्यते। अयं तु मनुरुत्तरकुरुषु देवलोके तदासीत्। अतो मनुष्याणामेषां प्रशासनाय वैवस्वतो मनुस्तस्मिन्नेव मनुष्यलोके राज्यं कर्तुं स्वपुत्रान् प्रस्थापयामास। इक्ष्वाकुः, नृगः, धृष्टः, शर्य्यातिः, नरिष्यन्तः, प्रांशुः, नाभानेदिष्टः, करूषः, पृषध्रः, सुद्युम्नश्चेति दशैते तस्य वैवस्वतस्य श्राद्धदेवस्य मनोः पुत्रा आसन्। इलानाम्नैका कन्या चेयमिक्ष्वाकुतोऽपि ज्येष्ठासीत्। त इमे दश भ्रातरो मानवा विवस्वतः सूर्य्यस्य पौत्रा इति कृत्वा एषामेव वंशधराः सर्वे सूर्य्यवंश्याः क्षत्रिया उच्यन्ते। या चेयमिला नाम्नी सर्वज्येष्ठा भगिन्याऽऽसीत्, तद्वंशधरा एव तु चन्द्रवंश्याः क्षत्रिया उच्यन्ते इति ऐतिहासिकानां समयो भवति। तेषु सर्वज्येष्ठः खल्वयमिक्ष्वाकुः स्वपितुर्मनोः श्राद्धदेवस्य देहत्यागानन्तरं भरतखण्डे समागत्य मनुष्यलोकसंबन्धिनीमिमां पृथ्वीं दशभ्रातृदायानुरोधेन दशधा व्यभजत्। तदुक्तं शिवपुराणोमासंहितायां षट्त्रिंशाध्याये— "प्रविष्टे तु मनौ तात दिवाकरतनुं तदा। दशधा तत्र तत् क्षेत्रमकरोत् पृथिवीं मनुः"—इति। अत्रेक्ष्वाकुरपि मनुशब्देनाख्यायते मनुपुत्रत्वात्। श्राद्धदेव एव वा मनुरिक्ष्वाकवे दशधा विभागायाज्ञापयत्। तदनुसारेणायं दशधा विभज्य प्रधानराजधान्यर्थं गङ्गातः पूर्वस्यां दिशि कंचन भूभागं सर्वतः पूर्वमवधनाम्ना प्रस्तुत्य तत्रायोध्यां नाम नगरीं सर्वसमृद्धां रूपसम्पन्नां विनिर्माय तां निजराजधानीं प्रतिष्ठापयामास। महाभारतयुद्धकालात् पूर्वाणि प्रायेण सार्द्धद्वादशशतानि (१२५०) वर्षाणामतीत्य संभवत्यस्या अयोध्या नगर्य्या निर्माणकालः। तन्निर्य्यातुरिक्ष्वाकोर्यु-

धिष्ठिरापेक्षयैकपञ्चाशत्तमत्वात्। प्रतिवर्षशतकस्य च प्रायेण चतुः पुरुषतयोन्मानात् तत्रायोध्यायामयमिक्ष्वाकुस्तावत् साम्राज्यायाभिषिक्तः सर्वगुणसम्पन्नः सम्राडिमां मनुष्यलोकसम्बन्धिनीमासमुद्रान्तां पृथ्वीमेकक्षत्रामनुशशास। तस्याऽन्ये कनिष्ठा भ्रातरस्तत्र तत्र प्रान्तदेशेषु माण्डलिकाधिपतित्वेन विभज्य प्रतिष्ठापिता इक्ष्वाकुशासनाधीनाः स्वं स्वं राज्यं चक्रुः। तत्राऽयं सर्वकनिष्ठः सुद्युम्नोऽत्र दक्षिणपूर्वस्यां दिशि गयाप्रदेशमारभ्य समुद्रपर्य्यन्तभूभागे माण्डलिकाधिपतित्वं लेभे। भरतखण्डस्य मध्यभागे सुप्रसिद्धादस्मात् सिन्धुनदात्पश्चिमदेशे वाह्लीकनगर्य्यामयं सुद्युम्नो राजाऽऽसीदित्यन्ये। अथ भगिन्या इलायाः स्त्रीत्वाद् भागायोग्यत्वेऽपि ज्येष्ठत्वाद् वैवस्वतप्रियत्वादिक्ष्वाकुप्रभृतीनां भ्रातृणामपि तस्यां निरतिशयसौहार्दसत्वादितरभ्रातृवदस्या अपि कश्चन भूभागो दायत्वेन परिकल्पितोऽभूत। तथा चेयमिला प्रतिष्ठानपुरोपलक्षिते भूभागेऽधिष्ठातृत्वेनाभिषिक्तासीत्। किंतु इलायाः स्त्रीत्वाद् राज्यप्रबन्धाक्षमतया तत्साहाय्यार्थेक्ष्वाकोरनुमत्या सर्वकनिष्ठः सुद्युम्नोऽप्यत्र प्रतिष्ठानपुरे नियुक्तोऽभूत्। इलाया एव राज्यसिंहासने प्रतिष्ठितत्वेऽपि सर्वस्तत्र प्रजाशासनप्रबन्धः सुद्युम्नस्याधिकारे प्रत्यपद्यत। अत एव तु पुराणेतिहासेषु क्वचिदिदं प्रतिष्ठानपुरं सुद्युम्नस्य राजधानीत्युच्यते। क्वचिद्वा तस्य इलाया राजधानीति प्रतिज्ञायते तदेतदुभयं समञ्जसं भवति॥

अथ प्रतिष्ठानपुराख्यानम्—

तदिदं प्रतिष्ठानपुरं कुत्रासीदिति चिन्त्यते। तत्र चतुर्धा विप्रतिपद्यन्ते॥ १॥ प्रयागसन्निधावासीदित्येके ॥ २॥ दक्षिणदेशे दण्डकारण्ये इलस्य पुरसन्निधावासीदिति केचित्॥ ३॥ हस्तिनापुरसन्निधावासीदित्यन्ये ॥ ४॥

सिन्धुनदात् पश्चिमप्रान्ते पञ्चक्रोशप्रदेशे तदासीदिति परे। तेषु प्रयागवादिनस्तावदाहुः—

"राज्यं स कारयामास प्रयागे पृथिवीपतिः।
उत्तरे जान्हवीतीरे प्रतिष्ठाने महायशाः॥"

इति हरिवंशे ब्रह्मादिषु च स्मरणात् प्रयागासन्ने गङ्गाया उत्तरतीरे प्रतिष्ठानपुरसंनिवेशो लभ्यते।

यजुब्रह्माण्डे ८ उपोद्घाते ३ पादे ६६ अ०) उत्तरे यामुने तीरे"—इति पाठो दृश्यते।

लैङ्गेऽपि—

"उत्तरे यमुनातीरे प्रयागे मुनिसेविते।
प्रतिष्ठानाधिपः श्रीमान् प्रतिष्ठाने प्रतिष्ठितः॥"

इत्येवं पठ्यते। तत्र जाह्नवीतीरे यमुनाशब्दो लेखकप्रमादादपपाठः। अथवा प्रयागे द्वयोरेव संगमना जाह्नव्युत्तरस्य यमुनातोऽप्युत्तरत्वं पश्यद्भिरविशेषात्तथोक्तम्। तथा चोभाभ्यां ताभ्यामुत्तरत्वस्मरणात् त्रिवेणीसंगमस्थानात् सामीप्येनोत्तरतः कचिदस्य प्रतिष्ठानपुरस्यावस्थानं संभाव्यते।

यत्तु 'प्रयागे प्रतिष्ठाने'—इति सामानाधिकरण्येन स्मरणात् प्रयागस्यैव प्रतिष्ठानत्वं केचिदाशङ्कन्ते तद् भ्रान्तम्। ययातिचरिते माधव्याः प्रतिष्ठानतः प्रयागे गमनस्मरणात् तयोर्भिन्नदेशत्वोपपत्तेः। प्रयागे इति तु सामीप्ये सप्तमी। गङ्गायां घोष इतिवल्लाक्षणिकव्यपदेशो वा।

अथवा प्रकृते प्रयागशब्दो नैकनगराभिप्रायः प्रयुज्यते, अपि तु नाना नगरखेटखर्वटग्रामसमूहात्मकमण्डलाभिप्रायो द्रष्टव्यः। राजशासनानुरोधेन प्रकल्पिते प्रयागमण्डले प्रतिष्ठानस्याप्यन्तर्भुक्ततया प्रयागे प्रतिष्ठानव्यवहारोऽपि साधूपपद्यते। मण्डलसद्भावश्चैतत् प्रयागसंबन्धेनोक्तः। पाद्मतृतीयस्यैकचत्वारिंशेऽध्याये"—

"प्रयागं तु विशेषेण स्वयं रक्षति वासवः।
मण्डलं रक्षति हरिर्देवैः सह सुसंमतम्"॥

इति, तथा च बहुविस्तृत संनिवेशस्य प्रयागस्य नाना विभागात्मकतया मुख्यप्रयागनगरात्सीमाप्रान्तवर्तिनोऽस्य प्रतिष्ठानस्य प्रयागनगरभिन्नत्वं प्रयागमण्डलान्तर्गतत्वं चेत्युभयथाऽपि व्यवहारः शक्यते कर्तुम्।

अथाऽन्ये कंचिद् विशेषमप्यत्राचक्षते। तथाहि त्रिविधं प्रयागं शिष्यते। मण्डलात्मकं नगरात्मकं ब्रह्मक्षेत्रात्मकं च। तत्र प्रयागनगरात् पूर्वतः कुण्डत्रयोपेतं यज्ञवेदीस्थानं ब्रह्मक्षेत्रं नाम प्रयागं भवति। तन्मुख्यः तत्संबन्धेनैव नगरं प्रयागं तत्संबन्धेन च मण्डलमपि प्रयागं भवतीति द्रष्टव्यम्। यत्रेदानीं गङ्गाप्रवाहो दृश्यते। ततः किञ्चिदुत्तरेण पुराकाले गङ्गा प्रवहतिस्म। तस्या वर्तमानप्रवाहस्थाने पुरायुगे कुण्डत्रयोपेता ब्रह्मणो यज्ञवेदी विनिर्मिताऽऽसीत्। तदाकाले ब्रह्मणा प्रकृष्टं यागं कुर्वता दूरदूरे पञ्चवेद्यो व्यधीयन्त :—

"प्रयागो मध्यमा वेदिः पूर्वा वेदिर्गयाशिरः।
विरजा दक्षिणा वेदिरनन्तफलदायिनी॥ १॥
प्रतीची पुष्करा वेदिस्त्रिभिः कुण्डैरलंकृता।
समन्तपञ्चकं तूक्ता वेदिरेवोत्तरा तथा॥ २॥
आसमन्ताद्योजनानि पञ्च पञ्च च सर्वतः।
समन्तपञ्चकं नाम धर्मस्थानमनुत्तमम्॥ ३॥

इति (वा. २२ अ०) वामनपुराणे द्वाविंशेऽध्याये तदुक्तेः। समन्तपञ्चकं कुरुक्षेत्रम्। वेद्यां हि वैतानिकयज्ञसंबन्धिनः सर्वाः आहवनीयगार्हपत्यदक्षिणाग्नि-

संयोगात् कुण्डत्रययुक्ता भवन्ति। तेनैतस्यां मध्यमायामपि वेद्यां कुण्डत्रयमासीत्। कालान्तरे गङ्गया तत्कुण्डत्रयमाक्रम्य तन्मध्यमार्गेण प्रवाहः प्रवर्तित इति नेदानीन्तानि स्पष्टं दृश्यन्ते। तथा चोक्तं पाद्मे (३ स्वर्ग ख० ३६ अ०)

"तत्र त्रीण्यपि कुण्डानि तयोर्मध्येन जाह्नवी।
प्रयागात् समतिक्रान्ता सर्वतीर्थपुरस्कृता॥ १॥
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता।
यमुना गङ्गया सार्द्धं सङ्गता लोकपाविनी॥ २॥

एतेन द्वयोः कुण्डयोरुपरि गङ्गायमुनयोः सङ्गम उच्यते। तृतीयन्तु सरस्वतीकुण्डमिदानीमपि पृथगेव दृश्यते। तदित्थं कुण्डत्रयोपेतमहावेद्यात्मकं प्रयागं त्रिवेणीसङ्गमस्थानस्थितं पृथगिति सिद्धम्। तदेव ब्रह्मणो देवयजनक्षेत्रत्वाद् ब्रह्मक्षेत्रं नामोपपद्यते। तस्य च ब्रह्मक्षेत्रप्रयागस्य नगरप्रयागं पश्चिमसीमा भवति। कम्बलाश्वतरतीर्थं दक्षिणसीमा प्रतिष्ठानन्तु पूर्वसीमा। तदुक्तम्—पाद्मे तृतीयखण्डैकचत्वारिंशाध्याये (३।४१।)

"आ प्रयागात् प्रतिष्ठानात् धन्वकी वासुकीह्रदात्।
कम्बलाश्वतरौ नागौ नागाश्च बहुमूलिकाः॥ १॥
एतत् प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम्"॥ इति॥

अत्र वासुकीह्रदस्य भोगवतीति नामान्तरम्। "ततो भोगवती नाम वासुकेस्तीर्थमुत्तमम्"॥ इति पाद्मोक्तेः।

तेन प्रयागतीर्थप्रतिष्ठानतीर्थभोगवतीतीर्थकम्बलाश्वतरतीर्थैश्चतुःसीमाबद्धो वेदिप्रयागः प्रदर्शितो भवति। तत्र कम्बलाश्वतरस्य दक्षिणदिग्वर्तित्वं चोक्तम् कौर्मे सप्तत्रिंशाध्याये—

"कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे।
पूर्वपार्श्वे तु गङ्गायास्त्रैलोक्ये ख्यातिमाप्नुप॥
अवटः सर्वसामुद्रः प्रतिष्ठानं च विश्रुतम्॥ २॥
उत्तरेण प्रतिष्ठानं भागीरथ्यास्तु सव्यतः।
हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम्॥ इति॥

एषा च प्रतिष्ठानादीनामभिविधिसीमात्वं द्रष्टव्यम्, नतु मर्यादासीमात्वम्।

"प्रयागं सुप्रतिष्ठानं कम्बलाश्वतरावुभौ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः॥

इति पाद्मे तेषां वेदीशरीरान्तर्गतत्वेनोपपादनात् । तस्मान्नगरप्रयागभिन्नस्यापि तस्य प्रतिष्ठानस्य वेदीप्रयागैकदेशत्वान्मण्डलप्रयागैकदेशत्वाच्च प्रयागशब्देन व्यपदेशो न विरुध्यते । तेन प्रयागे गमनञ्च माधव्याः सङ्गच्छते ।

ननु पाद्मे—ऊनचत्वारिंशाध्याये—

"प्रयागं सर्वतीर्थेभ्यः प्रभावेणाधिकं प्रभो ।
ततः पुण्यतमं नास्ति त्रिषुलोकेषु भारत" ॥

इति प्रयागप्रशंसामुपक्रम्य—

"एवमेषा महाभाग प्रतिष्ठाने प्रतिष्ठिता ।
तीर्थयात्रा महा पुण्या सर्वपापप्रमोचनी" ॥

इत्येवं प्रतिष्ठाने तदुपसंहारात् प्रयागप्रतिष्ठानयोरैक्यं प्राप्नोति । तत्कथं प्रतिष्ठानस्यैकदेशत्वमाख्यायते इति चेत्, अत्राच्यते—इह हि नानातीर्थव्यूहात्मकप्रयागसम्बन्धिन्यास्तीर्थयात्रायाः प्रतिष्ठाने प्रतिष्ठा निर्दिश्यते । प्रयागाश्रितेषु सर्वेषु तीर्थेषु गत्वा सर्वान्ते प्रतिष्ठानं गच्छेत् । तत्र गतस्य प्रयागयात्रा सम्पूर्णा सम्पद्यते इत्यभिप्रायः । तेन प्रतिष्ठानस्य प्रयागैकदेशत्वे सिद्धेऽपि सर्वथा प्रयागप्रतिष्ठानयोरैक्यमुपक्षेप्तुं न शक्यते । पूर्वोक्तानेकवचनैस्तयोर्भेदस्योपपादितत्वात् । नन्वेवमपि पूर्वं त्रिवेणीसंगमस्थानादुत्तरतः प्रतिष्ठानपुरसन्निवेशः प्रतिज्ञातः ।

अथेदानीं प्रतिष्ठानस्य पूर्वसीमात्वमाख्यायते तद्विरुद्धमिति चेन्न । जाह्नव्या-उत्तरतीरे सन्निविष्टस्यैव प्रतिष्ठानस्य जाह्नव्याः पूर्वदिग्वर्तित्वोपपत्तेः । तथाहि-'उत्तरे जाह्नवीतीरे'-इत्यत्रात्तरशब्दो वामदिक्परः त्रिवेणीसंगमस्थाने गंगायां दक्षिणपार्श्वे पश्चिमदिागतया यमुनया सह संगन्तुमियं गंगादक्षिणाभिमुखी कथं चित् भूत्वा पश्चात् किंचित् पश्चिमवाहिनी भवति । तत्र तस्याः प्राच्यामेव तदुत्तरं कूलं सम्पद्यते । तस्माद्दक्षिणाभिमुखप्रवणायाः गङ्गायाः प्राच्यां दिशि नाति दूरं प्रतिष्ठानपुरमासीदिति सिद्धम् । तच्च त्रिवेणीसङ्गमस्थानादुत्तरस्यामेव दिश्युपपद्यते इति न केषांचिद्वचनानां विरोधः सम्भवति । यत्तु इदानीन्तनाः केचन विद्वांसो विठूरनाम्ना प्रसिद्धं नगरं प्रतिष्ठानपुरमाहुः तदसत् । तस्य पुरात्वे बार्हिष्मती नाम्ना प्रसिद्धतया प्रतिष्ठानत्वासम्भवात्—इति दिक् ।

इत्थं च सर्वथा भरतखण्डस्य मध्यभागे प्रतिष्ठानसत्ता निर्विवादं लभ्यते । अत एव ययातिर्नाहुषः प्रतिष्ठानाधिष्ठाता स्वपुत्रं पूरुं प्रतिष्ठानेऽध्यासनं प्रतिष्ठापयन् स्पष्टमाचष्टे ।

"गंगायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव । मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव इति ( मात्स्ये ३६ अ० ) । अन्त्या अपि ते देशा भ्रातृणमित्थं विभज्यन्ते । यथोक्तं वैष्णवे—

"दिशि दक्षिणपूर्वस्यां तुर्वसुं च समादिशत्।
प्रतीच्याञ्च तथाद्रुह्यं दक्षिणायां ततो यदुम्॥
उदीच्यां च तथैवानुं कृत्वा मण्डलिनो नृपान्।
सर्वपृथ्वीपतिं पूरुं सोऽभिषिच्य वनं ययौ॥ इति॥

लैंगे यथा—

"सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम्।
व्यभजच्च त्रिधा राज्यं पुत्रेभ्यो नाहुषस्तदा॥ १॥
अभिषिच्य ततो राज्ये पूरुं ससुतमात्मनः।
दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत्॥ २॥
दक्षिणायामथो राजा यदुं ज्येष्ठं न्ययोजयत्।
प्रतीच्यामुत्तरस्यां च द्रुह्युं चानुं च तावुभौ॥ ३॥ इति॥

अत्र मध्यराज्यं पूरवे, दक्षिणपूर्वराज्यं देवयानीपुत्राभ्यां, पश्चिमोत्तरराज्यन्तु शर्मिष्ठापुत्राभ्यामित्येवंप्रकारेण पुत्रेभ्यस्त्रेधा राज्यविभागो द्रष्टव्यः। अथवा व्यभजत् पञ्चधा राज्यमितिशुद्धपाठस्थाने लेखदोषात् त्रिधाशब्दः पठ्यते सोपपाठः।

"सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम्।
व्यभजत् पंचधा राजा पुत्रेभ्यो नाहुषस्तदा॥ १॥
अभिषिच्य ततः पूरूं स राज्ये सुतमात्मनः।
दिशि दक्षिणपूर्वस्यां तुर्वसुन्तु न्यवेशयत्॥ २॥
दक्षिणापरतो राजा यदुं ज्येष्ठं न्यवेशयत्।
प्रतीच्यामुत्तरस्यां च द्रुह्युं चानुं च तावुभौ॥ ३॥

इत्येवं ब्रह्माण्डे स्पष्टं पञ्चशब्दोल्लेखात्; तथैवौचित्याच्च। तथा च गङ्गायमुनान्तरालदेशाधिष्ठातुरस्य पूरोरवश्यं प्रयागासन्ने प्रतिष्ठाने प्रतिष्ठानं संभाव्यते, नत्वन्यत्र॥

यत्तु पञ्चक्रोशप्रदेशे पुष्कलावतीसन्निधाने हस्तिनापुरसन्निधाने वा प्रतिष्ठानमासीदिति केचिदाहुः तदेतेन परास्तम्। पुष्कलावत्यास्तावद् गान्धारदेशे सन्निविष्टतया प्रतीचीदेशत्वेऽपि मध्यदेशत्वाभावात्। पूरुमहाराजाय तु मध्यदेशराज्यं दत्तमित्यवश्यं प्रतिष्ठानेन मध्यप्रदेशे भवितव्यं, न प्रतीचीदेशे। तत्रद्रुह्यो राज्यसन्निवेशस्याख्यातत्वात्। यत्तु गान्धारदेशस्यैव मध्यदेशत्वं प्रकल्प्य ततः प्रतीच्यां द्रुह्युराज्यसन्निवेशः प्रकल्प्यतामिति कश्चिद् ब्रूयात्। तत्तुच्छम्। द्रुह्युवंशधरसम्बन्धेनैव गान्धारदेशस्य नामकरणात् तस्य द्रुह्युदेशत्वावगमात्॥

तथाहि—द्रुह्योर्द्वौ पुत्रौ सेतुकेतू बभूवतुः। सेतोः शरद्वानासीत्। तस्य गान्धारः—इति मात्स्येऽष्टचत्वारिंशे व्याख्यातम्॥

"द्रुह्योस्तु तनयौ शूरौ सेतुः केतुस्तथैव च ।
सेतुपुत्रः शरद्वाँस्तु गान्धारस्तस्य चात्मजः ॥ १ ॥
ख्यायते यस्य नाम्नाऽसौ गान्धारविषयो महान् ।"

इति—शरद्वतांऽङ्गारसेतुरिति नामान्तरम् । तथा चोक्तम् हरिवंशे—

"द्रुह्योस्तु तनयौ राजन् बभ्रुसेतुश्च पार्थिवः ।
अङ्गारसेतुस्तत्पुत्रो मरुतां पतिरुच्यते ॥
अङ्गारस्य तु दायादो गान्धारो नाम भारत ।
ख्यायते यस्य नाम्नाऽसौ गान्धारविषयो महान् ॥२॥ इति (१ । ३२)

तदित्थं गान्धरस्य द्रुह्युदेशत्वे निर्णीते यस्मात् प्रदेशादस्य प्रतीच्यत्वं तस्मिन्मध्यमे गङ्गायमुनान्तराले प्रदेशे प्रतिष्ठानं सम्भाव्यते, न तु पञ्चक्रोशप्रदेशे ।

अपिच दुष्यन्तमागता शकुन्तला दुष्यन्तस्य पृथ्वीलोकवासित्वमाख्यायान्तरिक्षचारित्वं प्रत्याचष्टे ।

"क्षितावटसि राजेन्द्र अन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥" ( महाभा० आदि० ७४ ) इति ।

यदि दुष्यन्तनगरं गजसाह्वयं प्रतिष्ठानं वा पञ्चक्रोशस्थाने संनिविष्टमभविष्यत्, तदान्तरिक्षचारिणां गन्धर्वाणां विषयेषु संनिविष्टस्य तस्यान्तरिक्षान्तर्गतत्वापत्तौ दुष्यन्तस्याप्यन्तरिक्षचारितया तदन्तरोपपादनमसङ्गतं स्यात् । तस्मात् प्रयागस्थाने प्रतिष्ठानं न पञ्चक्रोशस्थाने, इति सिद्धम् ॥

एवं हस्तिनापुरसन्निधानेऽपि प्रतिष्ठानं नैवासीत् । तस्य गङ्गायमुनान्तरालवर्तित्वेऽप्युत्तरदेशतया मध्यदेशत्वाभावात् । अपि च हस्तिनापुरं तावत् कुरुमहाराजस्य वृद्धप्रपितामहेन हस्तिना राज्ञा विनिर्मितमित्याहुरैतिहासिकाः ॥

यथोक्तम्—मात्स्ये पञ्चाशे ( ५० )

"बृहत् क्षत्रस्य दायादो हस्तिनामा बभूव ह ।
तेनेदं निर्मितं पूर्वं पुरं तु गजसाह्वयम् ॥" इति ॥

तदित्थं हस्तिना निर्मितेऽपि हस्तिनापुरे हस्तिनस्तत्रावस्थानं नासीत् । हस्तिप्रपौत्रस्य संवरणस्य प्रतिष्ठानेऽवस्थानस्मरणात् ॥

तथाहि—वामनपुराणैकविंशाध्याये संवरणस्य वैभ्राजवने तपतीदर्शनात् कामातुरस्य प्रतिष्ठाने गमनं स्मर्य्यते—

"सोमवंशोद्भवो राजा ऋक्षो नाम महाबलः।
कृतस्यादौ समभवद् ऋक्षात्संवरणोऽभवत् ॥ १ ॥
स चाप्यारुह्य तुरगं प्रतिष्ठानं पुरोत्तमम्।
गतस्तु मेरुशिखरं कामचारी यथामरः ॥ २ ॥ इति ॥

अपि च भविष्योत्तरे संवरणाय राज्ञे सनकोक्तं कोटिहोमविधानं श्रीकृष्णः प्राह—

"राजा संवरणः पूर्वं प्रतिष्ठाने पुरोत्तमे।
बभूव स महाभागः शास्त्रास्त्रकुशलो बली ॥

इत्यादिना। विधानपारिजाते द्वितीयस्तबकेऽप्येतदुक्तम्। तेनास्य राज्ञः संवरणस्य प्रतिष्ठानपुरवासित्वं विज्ञायते। तस्य पुत्रस्तु कुरुरिदं हस्तिनापुरप्रान्तं सर्वं स्ववशे कृत्वा कुरुजाङ्गलनाम्ना कुरुक्षेत्रनाम्ना च प्रसिद्धं कारयामास। स एव च पूर्वां राजधानीं परित्यज्येदं हस्तिनापुरं राजधानीत्वेन प्रकल्पयामासेत्याहुरैतिहासिकाः। यथोक्तं मात्स्ये पंचाशे (५०)

"ऋक्षात् संवरणो जज्ञे कुरुः संवरणात् ततः।
यः प्रयागमतिक्रम्य कुरुक्षेत्रमकल्पयत् ॥ १ ॥
गङ्गयापहृते तस्मिन्नगरे नागसाह्वये।
त्यक्त्वा विवक्षुर्नगरं कौशाम्ब्यां तु निवत्स्यति" ॥ २ ॥

इति। तेन पूरूरवसमारभ्य संवरणान्ताः पौरवाः प्रयागे राज्यं चक्रुः। कुरुमारभ्याधिसीम कृष्णान्ताः कौरवाः हस्तिनापुरे राज्यं चक्रुः। विवक्षुं त्वारभ्य क्षेमकान्ताः कौरवाः कौशाम्ब्यां राज्यं चक्रुरित्येवं त्रिधा कृत्वा पौरववंश्यानां राज्ञामिमास्तिस्रो राजधान्योऽवधार्य्यन्ते। इत्थं च प्रतिष्ठानाधिष्ठातुः संवरणस्य पुत्रेण कुरुणा प्रयागपरित्यागेन हस्तिनापुरस्य राजधानीकरणात् प्रयागस्यैव प्रतिष्ठानं लभ्यते, नतु हस्तिनापुरस्येति सिद्धम्।

सैषा प्रथमा प्रतिपत्तिराख्याता ॥ १ ॥

दण्डकारण्यवादिनस्त्वाहुः—

"प्राप्य पुंस्त्वं स सुद्युम्नः परं हर्षमुपागतः।
महाभ्युदयसिद्ध्यर्थमश्वमेधं चकार सः ॥ १ ॥
चतुरङ्गं बलं राज्यं दण्डकेऽस्थापयत् तदा।
इलस्य पुरनाम्ना तु विख्यातं तदिलापुरम् ॥ २ ॥
विनताश्वं पुंस्त्वजातं तत्र राज्येऽभिषिच्य सः।
प्रतिष्ठाने प्रतिष्ठाप्य तमैलं वनमाययौ ॥ ३ ॥

इति ब्राह्मवचनाद् दण्डकनाम्ना सुप्रसिद्धं दाक्षिणात्यप्रदेशो सुद्युम्नस्य दायप्राप्तं राष्ट्रमासीत्। अत एव तद्राष्ट्रं सुद्युम्नः स्वपुत्रेभ्यो विनताश्वगयोत्कलेभ्यः पुरूरवसे च विभज्य दत्तवान्।

"उत्कलस्योत्कलं राष्ट्रं गयराष्ट्रं गयापुरी।
तथैव विनताश्वस्य राष्ट्रेऽभूत् पश्चिमे स्थितिः॥ १॥

इति स्मरणात्। तत्र मगधोत्कलाभ्यां पश्चिमे प्रदेशे इलस्य पुरं नाम नगरं निर्म्माय तत्र विनताश्वमभिषिच्य तत्सन्निधाने प्रतिष्ठानं नामान्यन्नगरं प्रतिष्ठापितं तत्र च पुरूरवसं नामैलं प्रतिष्ठाप्य सुद्युम्नो वनं जगामेत्यर्थो विज्ञायते। एतदेव सत्यं प्रतीयते। तथा हि स्त्रीत्वे पुरूरवसः पुंस्त्वे तु विनताश्वगयोत्कलानां स्मरणाच्चतुर्षु सुद्युम्नपुत्रेषु सत्सु विनताश्वादीनामिह पूर्वदक्षिणदेशे इलस्यपुरगयोत्कलनाम्न्यो नगर्यो दीयमानाः स्युः। पुरूरवसस्तु गन्धर्वदेशेऽतिदूरे प्रतिष्ठानपुरं दत्तं स्यादिति न समञ्जसमवकल्पते। तस्मादिलस्य पुरसंनिहितं दाक्षिणात्यं प्रतिष्ठानपुरमेवास्य पुरूरवसो राजधानीनगरं स्यादिति युक्तमुत्पश्यामः। प्रसिध्यतश्चैते द्वे नगरे अद्यापि दक्षिणापथे—इलस्य पुरं च प्रतिष्ठानं चेति। तदुक्तं जिनप्रभसूरि विरचिते तीर्थकल्पे—इह भारते वर्षे दक्षिणखण्डे महाराष्ट्रदेशावतंसभूतं श्रीमत्प्रतिष्ठानं नाम पत्तनं विद्यते इति। तच्च पयठण ( पैठण ) इति लोके प्रसिद्धम्। गन्धर्वदेशे हस्तिनापुरप्रान्ते प्रयागस्थाने च प्रतिष्ठानपुरमप्रसिद्धमिति दिक्॥ सैषा द्वितीया प्रतिपत्तिराख्याता॥ ३॥

अथ हस्तिनापुरवादिनः प्राहुः। सार्द्धद्विमिते पूर्वदेशान्तरे किंचिदधिकोनत्रिंशदक्षांशे (२६। १) च संनिविष्टमिदं तावद्धस्तिनापुरं केन विनिर्मितमित्यत्र मतचतुष्टयं भवति। कुरुणा हस्तिना पुरुणा पुरूरवसा चेति। तत्रैते पुरुहस्तिकुरवस्त्रयोऽप्युत्तरोत्तरविशेषराज्यश्रीसमर्पकत्वेनैतन्नगरपरिष्कारकर्तार एवासन्। नगरनिर्माता तु सर्वादौ पुरूरवा एवासीदिति सिद्धान्तः। यत्तु कुरुरयं प्रयागपरित्यागेन हस्तिनापुरे निवासं चक्रे इत्याहुः। तस्य कुरुसमये सर्वथा प्रतिष्ठानराजधान्या निःशेषविध्वंसोऽभूदित्यत्र तात्पर्य्यम्। अत एव तत्कुरोरुत्तरेषां प्रतिष्ठानेन सह सम्बन्धो न स्मर्य्यते। अथ यत्पुनरिदं नगरं हस्तिना महाराजेन प्रतिष्ठापितमित्यैतिहासिकाः केचिदाहुः, तदपि भ्रान्तिमात्रम्। हस्तिनः प्रशंसा वा। हस्तिनोऽप्यतितरां पूर्वस्मिन् कालेऽस्य नगरस्य विद्यमानत्वात्। तथाहि हस्तिनो वृद्धप्रपितामहस्य शकुन्तलागर्भजातस्य दौष्यन्तेर्भरतस्य हस्तिनापुरे मात्रा सहागमनं स्मर्य्यते। यथोक्तं महाभारते आदिपर्वणि शकुन्तलोपाख्याने—

"तथेत्युक्त्वा तु ते सर्वे प्रतिष्ठानं महौजसः।
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम्॥ १॥
आजगाम ततः सुभ्रूर्दुष्यन्तं विदिताद् वनात्।
सह तेनैव पुत्रेण बालार्कसमतेजसा॥ २॥

इति। एतेन दुष्यन्तस्य हस्तिनापुरवासित्वमद्धा विज्ञायते। तथा च दुष्यन्ता-दपि प्राचीनेन केनचिद् राज्ञा हस्तिनापुरं प्रतिष्ठापितमिति प्राप्नोति। तत्र केचिदाहुः पुरुणेदं प्रतिष्ठापितमिति। तथाहि। ययातिपुत्रस्य प्रतिष्ठानपुराधिष्ठातुः पूरोर्द्वे भार्ये आस्ताम्—पौष्टिः कौशल्या चेति। तत्रेयं पौष्टी ज्येष्ठा प्रवराऽतिप्रिया स्वाधीनपतिका चासीत्। कौशल्या त्वपरा सुमधुरप्रकृतिः कनिष्ठाऽऽसीत्। किन्तु सन्तानोत्पत्तौ कौशल्यागर्भजो जनमेजयः सर्वज्येष्ठः सर्वगुणसंपन्नोऽतितरां राज्ञः प्रियोप्यासीत् तस्मै राज्यं दातुमिच्छतापि राज्ञा मातृतो जैष्ठ्यमनुरुध्य प्रवीराय राज्यं देयं न जनमेजयायेति पौष्टीदुराग्रहेण वशवर्तिना सता प्रतिष्ठान-पुरासनं पौष्ट्यायैव समर्पितम्। ततो विरक्तचित्तो जनमेजयः स्वमनोविनोदाय मृगयाव्याजेन हिमवत्प्रदेशमाजगाम। तत्र गङ्गाया दक्षिणे तीरे हिमालयवनोपान्तात् परिगृह्यमाणानां हस्तिनां संग्रहालयः कश्चिदासीत्। तत्र कौतुकादागतस्य जनमेजयस्य तस्मिन् प्रान्ते मनःप्रीतिं दृष्ट्वा तद्विहारार्थं तमेव हस्तिग्रामं हस्तिनां पुरमित्याख्याय नगररूपेण स पूरुः परिणमयामास। तदेव हस्तिनां पुरं कालेन हस्तिनापुरं हास्तिनपुरं नागपुरं नागसाह्वयं गजसाह्वयमित्यादिभिः शब्दैर्व्यपदि-श्यतेस्म। अथैतद्धस्तिनापुरं राजधानीत्वेन प्रकल्प्य तत्रायं जनमेजयस्तत्पुत्रः प्राचीत्वतो वा पितुः पूरोरनुग्रहेण राज्यसिंहासने प्रतिष्ठापितोऽभूत्। तदारभ्य प्रवीरवंशधराः प्रतिष्ठाने, जनमेजयवंशधरास्तु हस्तिनापुरे विभज्य राज्यं चक्रुः। अत एव जनमेजयादधस्तनस्य चतुर्दशस्य दुष्यन्तस्यापि हस्तिनापुरेऽवस्थानमुपप-द्यते। यत्तु दुष्यन्तादप्यधस्तनस्य नवमस्य जनमेजयवंशधरस्य राज्ञः संवरणस्य प्रतिष्ठाने प्रतिष्ठानं स्मर्य्यते। नैतावता प्रतिष्ठानस्य प्रधानराजधानीत्वमास्थेयम्। अचिरेणैव कालेन पौष्ट्यानां वंशविच्छेदात् प्रतिष्ठानराज्यस्यापि जनमेजयवंश्य-वशवर्तित्वसिद्धौ जनमेजयवंश्यानां तत्रापि यथेच्छमवस्थानेपि हस्तिनापुरस्यैव प्रधानराज्यधानीत्वेनाभिप्रेतत्वादिति।

अत्रेदमुच्यते। जनमेजयेन हस्तिनापुरं विनिर्मितमित्यर्थस्तावन्न प्रामाणिकः प्रतीयते जनमेजयादपि पूर्वेषां पूरुययातिप्रभृतीनां हस्तिनापुरेऽवस्थानस्मरणात्। पौरूरवसस्यायोर्नागपुरेऽवस्थितस्य संनिधौ नहुषस्य सदारस्य गमनाख्यानाच्च। यथोक्तं पाद्मे (२।११७।२)

"ऐन्द्रेणापि स दिव्येन स्यन्दनेन वरेण च।
नागाह्वयं पुरं प्राप्तः सर्वशोभासमन्वितम्॥ १॥ इति॥

न चायुनैव नागपुरं विनिर्म्मितमित्यर्थः क्वचिदुपलभ्यते। तस्मात् ततोऽपि पूर्वस्य पुरुरवसः कालेप्यस्य हस्तिनापुरस्य सत्ता गम्यते। हस्तिनापुरान्नातिदूरे गङ्गाद्वारकनखलयोः समीपवर्तिनि पुरुनामनि कस्मिंश्चित् पर्वते पुरूरवस उत्पत्तेः। तथाहि महाभारते वनपर्वणि नवतितमेऽध्याये उदीच्यपुण्यभूमिवर्णनप्रसंगे गङ्गा-द्वारकनखल सान्निध्येन पुरुपर्वतः स्मर्य्यते—

"विभेद तरसा गङ्गा गङ्गाद्वारं युधिष्ठिर ।
सनत्कुमारः कौरव्य पुण्यं कनखलं तथा ॥
पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः" ॥ इति ॥

तेन स्वजन्मभूम्यां नातिदूरे दक्षिणतः स्वराजधानी हस्तिनापुरीं निर्म्माय तत्र तदवस्थानं सामञ्जस्येनोपपद्यते । तथा च पुरूरवसमारभ्यापि सीमकृष्णपर्यन्तानां षट्पञ्चाशत् पुरुषाणामिदं हस्तिापुरमेव राजधान्यासीदिति प्राप्नोति । एवं स्थिते प्रतिष्ठानपुरस्य राजधानीत्वसमर्पकाणि सर्वाणि वचनानि व्याकुप्यन्ते । एकैकस्य विदूरदेशान्तरेण राजधानीद्वयानुपपत्तेः । तस्माद्धस्तिनापुरमेवेदं प्रतिष्ठानपदवाच्यं स्यात् इत्यभ्युपगच्छामः । अथवास्तु भिन्नं भिन्नं पुरद्वयम् । अस्यैव हस्तिनापुरस्य सन्निधाने प्रतिष्ठानपुरसन्निवेशोऽभ्युपगन्तव्यः । तत्र हस्तिमहाराजतः पूर्वं प्रतिष्ठानस्यैव प्राधान्यमासीत् हस्तिनापुरं तूपनिवेशमात्रं राज्ञो विहार स्थानं संभाव्यते । अथ कालेन राज्ञश्चिरनिवासानुरोधेन हस्तिना महाराजेन साधुसंस्कृतं परिष्कृतं चेदं हस्तिनापुरं प्रधानराजधानीरूपेण परिणतं बभूव ।

प्रतिष्ठानं त्वप्रतिष्ठितं भूत्वा क्रमेण कुरुसमये सर्वथा विनष्टमेवाभूदिति विज्ञायते, महाभारतयुद्धकाले तस्य राजकीयोपनिवेशतया कुत्राप्यनुल्लेखात् । पुरात्वे तु प्रतिष्ठानपुरस्यैव राजधानीत्वेऽपि तत्रत्यानां महाराजानां मनोविनोदनार्थं चिराय नागपुरेऽप्यवस्थानसंभवात् तत्रैवायुमहाराजसमीपे नहुषस्य दुष्यन्तसमीपे भरतस्य चागमनं सामञ्जस्येनोप पद्यते हस्तिनापुरसन्निहितस्य प्रतिष्ठानस्योत्तरप्रान्तवर्तित्वादेव च तत्समीपवर्तिनि हिमवत्प्रदेशे चैत्ररथवनशरवणकुमारवनादौ सुद्युम्नादीनां प्रतिष्ठान पुराधिष्ठातॄणां महाराजानां भूयसा मृगयाविहाराद्यर्थं यातायातं संभाव्यते । अथ पुरात्वे त्वाहुदानदीतीरे शङ्खलिखितयोराश्रमद्वयमासीत् । तत्र मिथिलापूर्वस्थायाः कौशिक्याः पूर्वतो या वधूसरा नाम नदी वहते ततोऽपि प्राच्यामनतिदूरे बाहुदा नद्यासीदिति केचिदाहुः । वस्तुतस्तु हिमालयान्निःसृता धूमिला नाम्ना वृद्धराप्ती नाम्ना वा नदी काचिदवधप्रदेशे प्रवहति । सा पुरात्वे बाहुदा नाम्ना प्रसिद्धासीदिति तर्कयन्ति । तत्कूलस्थस्य लिखितमुनेः सुद्युम्नसमीपे दण्डधारणार्थं गमनमैतिहासिकैः स्मर्य्यते । तदप्यत एव साधूपपद्यते । ये तु गान्धारदेशे पुष्कलावतीस्थाने प्रतिष्ठानपुरं सम्भावयन्ति तेषामेतद्विरुद्ध्यते । पुष्कलावत्या अतिदूरे सन्निविष्टतया समीपवर्तिनो नृपतीन् विहाय तत्र सुद्युम्नसमीपे लिखितानुधावनस्य निर्हेतुकत्वापत्तेः । तस्मात् हस्तिनापुरमेवेदं प्रतिष्ठानपुरं तत्समीपे वा क्वचिदासीत् प्रतिष्ठानपुरमित्यभिसंदध्मः

यत्तु हस्तिनापुरसन्निहितस्य प्रतिष्ठानस्य मध्यदेशत्वं नोपपद्यते—इत्याहुः—तत्तुच्छम् । गंगायमुनान्तरालवर्तिनः सर्वस्यापि प्रदेशस्य प्रकृते मध्यदेशत्व विवक्षणाददोषात् । श्रूयते चैतरेयकश्रुतौ पुरायुगेऽप्यस्य कुरुपंचालदेशस्य मध्यदेशत्वम् । "प्राच्या दिशि ये के च नीच्यानां राजानो येऽपाच्यानाम । उदीच्यां

दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरवः उत्तरमद्राः । ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपंचालानां राजानः सवशोशीनराणाम् । राज्यायैव तेऽभिषिच्यन्ते, (ऐ० ८ । ३ । २)इति मात्स्ये चतुर्दशशताध्याये भुवनकोशेऽप्येवं कुरुपञ्चालदेशस्य मध्यदेशत्वमाख्यातम् । तास्त्विमे कुरुपाञ्चालाः शाल्वाश्चैव सजांगलाः'–इत्युपक्रम्य–'मध्यदेशा जनपदाः प्रायशः परिकीर्तिताः' इत्युपसंहारात् । मार्कण्डेयकौर्मादिष्वपि तत्तथैवाभ्युपगम्यते । तदनुसारेण बृहत्संहितायामपि भारतवर्षीयकूर्मविभागप्रकरणे–"गजाह्वयश्चेतिमध्यमिदम्"–( वृ० सं०, १४ अ० )–इति वदन्नस्य हस्तिनापुरस्य मध्यदेशत्वमभिप्रैति ।

यत्तूत्तरस्यां मनवे राज्यं पित्रा दत्तं तदिदं गंगायमुनाभ्यां साम्येनोत्तरवर्तिनि हिमालयप्रान्ते क्वचिदासीदिति न भ्रमितव्यम् । "प्रतीच्यामुत्तरस्यां च द्रुह्युं चानुं च तावुभौ"—इत्येवं सहैव तयोर्विनियोगेन सहयोगे तात्पर्य्यावधारणात् । द्रुह्युराज्यत एवोत्तरवर्तिनि देशेऽनुराज्यसत्तावगमात् । प्रयागादुत्तरवर्त्तिनि हिमवत्प्रदेशे त्वनोः स्वराज्यं नैवेष्यते । तद्वंशधराणां म्लेच्छप्रायत्वस्मरणाद्धिमालयदक्षिणप्रान्तीयभूमिकासु तु म्लेच्छराज्यविस्ताराप्रसिद्धेः । अथ यदुक्तं प्रयागे जाह्नवीतारे प्रतिष्ठाने—इत्युक्तेः प्रयागासन्ने प्रतिष्ठानमिति, तदपि नास्माकं विरुद्ध्यते । हस्तिनापुरसन्निहितस्यापि प्रतिष्ठानस्य । देवप्रयागसन्निधानेनोपपत्तेः । सन्ति हि भरतखण्डे नव प्रयागाः गङ्गायमुनयोः सङ्गमे तावदेकः स च सपादपञ्चविंशत्यक्षांशदेशीयः । अथ हिमवत्प्रान्तेऽलकनन्दायाः—भागीरथी, मन्दाकिनी, कर्णगङ्गा, नन्दगंगा, गरुडगंगा, पातालगंगा, विष्णुगंगा, सरस्वतीभिरुत्तरोत्तर क्रमेण संगमस्थानेषु देवरुद्र, कर्ण, नन्द, गरुड, पाताल, विष्णु, केशवपूर्वा अष्टौ प्रयागाः प्रसिद्ध्यन्ति । ते सर्वे सपादत्रिंशदक्षांशदेशीया भवन्ति । तेषु हस्तिनापुरसन्निहितस्य प्रतिष्ठानस्य प्रयागेणापि सान्निध्याभिधानादमुष्मात् हस्तिनापुरादुत्तरतो देवप्रयागात् किञ्चित्पश्चिमतो जाह्नव्या उत्तरे कूले क्वचिदासीत् प्रतिष्ठानपुरमिति निष्कर्षेणावगम्यते । उत्तरशब्दो वामदिक्परः । गान्धारदेशे तु प्रयागसन्निधानं नास्तीत्यतः पुष्कलावतीस्थाने प्रतिष्ठानसत्ता नोपपद्यते—इति सिद्धम् । सैषा तृतीया प्रतिपत्तिराख्याता ॥ ३ ॥

अथ पञ्चकोशवादिनः प्राहुः । पुरूरवस्तावदुर्वश्या गन्धर्विण्या सह भूयसा रमणमाख्यायते । उर्वश्या रमणेऽस्य गन्धर्वैः क्रियमाणो भूयानुपद्रवोऽपि स्मर्य्यते । गन्धर्वादस्य यज्ञाग्निसम्पादनविद्याग्रहणमुपदिश्यते । आयुःप्रभृतयः पूरूरवसोऽष्टौपुत्राः गन्धर्वलोकविदिताः स्मर्य्यन्ते । गन्धर्वैः सह संस्तवाधिक्यादुर्वशीप्रसंगाच्चास्य पूरूरवसो मातृसम्बन्धकृताया मानवजातीयतायाः परित्यागेन पितुर्गन्धर्वराजस्य बुधस्य जातौ प्रवेशेन च पश्चाद् गन्धर्वत्वमाख्यायते । गन्धर्वाणां विहारस्थानेष्वेव गंधमादनकलापग्रामनन्दनवनादिषु भूयसा विहारः स्मर्य्यते । इत्थमस्य पूरूरवसो गन्धर्वैःसह संस्तवाधिक्यदर्शनादस्य गन्धर्व देशवासित्वमद्धा विज्ञायते । तत्र के गन्धर्वदेशाः—इति निरूपयितुं गन्धर्वा एव तावद विविच्यन्ते । गन्धर्वास्तावद् द्विविधाः श्रूयन्ते—दिव्य- गन्धर्वाः,

मर्त्यगन्धर्वाश्च । "विश्वावसुरभि तन्नो गृणातु दिव्यो गन्धर्वो रजसो विमानः"—( ऋ० सं० १० । १३९ । ५ )—इति मन्त्रश्रुतौ गन्धर्वसम्बन्धेन दिव्यत्वविशेषणादेव मर्त्यगन्धर्वसत्ताप्रतिपत्तेः । तत्र दिव्यगन्धर्वाणामेकादशगणाः कौलिकशाखारूपाः आथर्वणश्रुतौ श्रूयन्ते । त एव च वह्निपुराणेऽपि गणभेदनामाध्याये स्मर्य्यन्ते—

"अभ्राजोऽङ्गारिवं भारी सूर्यवर्चास्तथा कृधुः ।
हस्तः सुहस्तः स्वाश्चैव मूर्धन्वांश्च महामनाः ॥
विश्वावसुः कृशानुश्च गन्धर्वैकादशा गणाः ॥

इति । मर्त्यगन्धर्वास्तु द्विविधाः—अप्रतिष्ठिताः प्रतिष्ठिताश्च । तत्राप्सरोभिः सहिता नृत्यगीतादिव्यवसाया निम्नकक्षाका अप्रतिष्ठिताः । अमीषां मर्त्यगन्धर्वाणामष्टौ कुलशाखा आसन् ।—हाहा, हूहूः, चित्ररथः, हंसः, विश्वावसुः गोमायुः, तुम्बरुः नन्दी चेति अथ ये सभ्या देशशासनादिकर्तार उन्नतवृत्तयस्तदानीमासंस्ते प्रतिष्ठिताः । एषां च प्रतिष्ठितगन्धर्वाणां जातिद्वयं महाभारते ( १ । ६५ । अ० ) स्मर्य्यते—मौनेयाश्च प्राधेयाश्च।तत्र मौनेयाः षोडशधा विभज्यन्ते।भीमसेनःउग्रसेनः, सुपर्णः, वरुणः, गोपतिः, धृतराष्ट्रः सूर्यवर्चाः, अर्कपर्णः, पर्ज्जन्यः कलिः, प्रयुतः, भीमः चित्ररथः, सर्वविद्वशी, शालिशिराः नारदश्चेति । एताः खलु मौनेयानां कुलशाखा भवन्तिस्म । अत्र नारदशब्दोऽप्ययं गन्धर्वकुलविशेषस्यैव प्रतिपादको द्रष्टव्यो न तु व्यक्तिविशेषपरोऽयं यदृच्छाशब्दः । अतिप्राचीनान्मनुसमयादारभ्यमहाभारतयुद्धसमयं यावदनेकधा श्रुतानां नारदानामेकव्यक्तिकत्वासम्भवात् । प्राधेयानान्तु दशैव कुलशाखा आसन्—सिद्धः पूर्णः, बर्ही, पूर्णायुः ब्रह्मचारी, रतिगुणः, सुपर्णः विश्वावसुः, भानुः, चन्द्रः, इति भेदात् । इत्थमेषामनेकशाखाविभक्तत्वादनेके तेषामभिजनदेशा निवासदेशाश्चाऽऽसन् । यथा मौनेयाः, गन्धर्वाः, षट्कोटिसंख्याताः पाताले निवसन्तिस्म । पातालशब्दश्चेदानीममेरिकानाम्ना प्रसिद्धस्य देशस्य पुरायुगे संज्ञाऽसीदिति सम्भावयन्ति । तत्र च पूर्वमनलवासुकितक्षकभेदात्, त्रिधा विभक्तानां नागवंशीयानां क्षत्रियाणां प्राधान्यमासीत् । किन्तु गन्धर्वास्तानि नागकुलान्यभिभूय प्रधानरत्नाधिपत्यमगृह्णन् ॥

ततोऽभिभूतेर्नागैः स्वकन्यां नर्मदां दत्वा संप्रार्थितः पुरुकुत्सो मान्धात्रः पाताले गत्वा सुचिरं नियुध्य गन्धर्वान् विनाश्य पुनर्नागप्राधान्यमस्थापयदिति विष्णुपुराणे चतुर्थांशे तृतीयाध्याये व्याख्यातम् विष्णुपुराणोक्तमेवार्थं स्मारयति भागवते नवमस्य सप्तमे—

"नर्मदा भ्रातृभिर्दत्ता पूरुकुत्साय योरगैः ।
तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया" ॥
गन्धर्वानवधीत्तत्र वध्यान् वै विष्णुशक्तिभृत् । इति

अथ प्राधेयगन्धर्वाणामभिजनदेशा गान्धाराः। सिन्धुनदादुभयपार्श्ववर्तिनः प्रदेशा एव हि गान्धारा उच्यन्ते। पिशाचलोकादूर्ध्वं गुह्यकलोकः, ततोगन्धर्वलोकः, ततो विद्याधरलोक इति—पौराणिकैः स्मर्य्यमाणतया गुह्यकप्रदेशसन्निधान एव गान्धर्वप्रदेशस्योपगन्तव्यत्वात्। गुह्यकदेशश्चेदानीं 'लद्दाख' संज्ञया सुप्रसिद्धः। काश्मीरस्योत्तरप्रान्तो हाटकदेश एवाध्यवसीयते। अतस्तत्सान्निध्यात् सिन्धुदेशा एवैते गान्धारदेशाः स्युः। एषु च गान्धारदेशेषु देवयुगादारभ्यैव ते गन्धर्वा निवसन्तिस्म। तदात्वे सोमसाध्यानां यज्ञानां प्रभावेण बलवत्तमैर्दैवै। सह युद्धे पराजिता असुराः कदाचित् सोमोत्पत्तिप्रदेशं समूलघातं विध्वंसयितुं कृतयत्ना बभूवुरिति तथाविधं तदध्यवसायं ज्ञात्वा देवेन्द्रः सोमोत्पत्तिसन्निधाने गान्धारदेशे चन्द्रमसमत्रिपुत्रं निवासयामास। सोमाद्यौषधीनामाधिपत्यं गन्धर्वाधिपत्यं च तस्मै दत्वा तं तत्र राजानमकरात्। इह हि मूजवन्यवनादारभ्य सरस्वतीसिन्धुनदसङ्गमपर्य्यंतेषु पर्वतारण्येषु भूयसा सोमलता उत्पद्यन्ते। सोमाश्चातितरां देवेन्द्रप्रिया आसन्। यज्ञोपकरणानि च तानि तदानीं महार्घ्याणि सर्वैः साधारण्येनालभ्यानि सोमपेयद्रव्याणि यत्नतो रक्ष्याणि बभूवुः। अत एव तत्रपर्वतप्रान्ते भूयसोत्पद्यमानानां सोमलतानां परिरक्षणार्थं देवेन्द्रेण नियुक्ता गन्धर्वजातयस्तत्प्रदेशे निवसन्तिस्मेति किषीषकीयश्रुतौ श्रूयते॥

"गन्धर्वा ह वा इन्द्रस्य सोममप्सु प्रत्यायिता गोपायन्ति। त उह स्त्रीकामा। ते ह्यासु मनांसि कुर्वते"

नदीजलाघाताद्विशीर्यमाणानां सुवास्तुसिन्ध्वादिनदीषु प्रवहमानानां सोमखण्डानामवग्रहार्थं तत्राप्सु नियुक्ता गन्धर्वाः सन्ति स्वभावतश्च तेऽतितरां स्त्रैणाः सन्तीत्यर्थः। राजनियुक्तानामेषां भृतिरूपेण तत्र कानिचिद् भूमिक्षेत्राणि देवेन्द्रदत्तानि स्युः। किन्तु पश्चात्ते स्वबलवीर्य्यात् तद्देशाधिपतयो राजानोऽप्यभवन्। तथा च रामचन्द्रसमयेपि तिस्रः कोट्यो गन्धर्वास्तत्र देशे ह्युषिताः स्मर्य्यन्ते- तेषां च गन्धर्वाणां गान्धारेषु सुविस्तृते चाराज्यं प्राधान्यं चैष रामचन्द्रभ्राता भरतोऽपहृत्य तत्र गन्धर्वनगरस्थाने पुष्कलावतीं नाम नगरीं विनिर्माय स्वपुत्रं पुष्कलं गान्धारदेशाधीश्वरं चक्रे। इति रामायणे वाल्मीकीये स्मर्य्यते। तथाहि—

"कस्यचित्वथ कालस्य युधाजित्केकयो नृपः।
स्वगुरुं प्रेषयामास राघवाय महात्मने॥ १॥
प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः।
गार्ग्यं संपूजमामास यथा शक्रो बृहस्पतिम्॥ २॥
उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे।
किमाह मातुलो वाक्यं यदर्थं भगवानिह॥ ३॥
रामस्य भाषितं श्रुत्वा महर्षिः कार्य्यविस्तरम्।
वक्तुमद्भुतसंकाशं राघवायोपचक्रमे॥ ४॥
अयं गन्धर्वविषयः फलमूलोपशोभितः।

सिन्धोरुभयतः पार्श्वं देशः परमशोभनः ॥ ५ ॥
तत्र रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः ।
शैलूषस्य सुतावीर तिस्रः कोट्यो महाबलाः ॥ ६ ॥
तान् विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम् ।
निवेशय महाबाहो स्वे पुरे सुसमाहिते ॥ ७ ॥
अन्यस्य न गतिस्तत्र देशः परमशोभनः ।
रोचतां ते महाबाहो नाहं त्वामहितं वदे ॥ ८ ॥
तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च ।
उवाच बाढमित्येव भरतं चान्ववैक्षत ॥ ९ ॥
सोऽब्रवीद् राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् ।
इमौ कुमारौ तं देशं ब्रह्मर्षे विचरिष्यतः ॥ १० ॥
भरतस्यात्मजौ वीरौ तक्षः पुष्कर एव च ।
मातुलेयसुगुप्तौ तु धर्मेण सुसमाहितौ ॥ ११ ॥
भरतं चाग्रतः कृत्वा कुमारौ सबलानुगौ ।
निहत्य गन्धर्वसुतान् द्वे पुरे विभजिष्यतः ॥ १२ ॥
ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम् ।
आज्ञापयामास तदा कुमारौ चाभ्यषेचयत् ॥ १३ ॥
नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरःसुतम् ।
भरतः सह सैन्येन कुमाराभ्यां विनिर्य्ययौ ॥ १४ ॥
अध्यर्द्धमासमुषिता पथि सेना निरामया ।
हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ॥ १५ ॥
श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः ।
युधाजिद्गर्गसहितं परां प्रीतिमुपागमत् ॥ १६ ॥
स निर्य्ययौ जनौघेन महता केकयाधिपः ।
त्वरमाणोऽभिचक्राम गन्धर्वान् केकयाधिपः ॥ १७ ॥
भरतश्च युधाजिच्च समेतौ लघुविक्रमैः ।
गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ १८ ॥
ततः समभवद्युद्धं तुमुलं लोमहर्षणम् ।
सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ १९ ॥
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् ।
संवर्तं नाम भरतो गन्धर्वेष्वभ्यचोदयत् ॥ २० ॥
ते बद्धाः कालपाशेन संवर्तेन विदारिताः ।
क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मनः ॥ २१ ॥
हतेषु तेषु सर्वेषु भरतः केकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ २२ ॥
तक्षं तक्षशिलायान्तु पुष्कलं पुष्कलावते ।
गन्धर्वदेशे रुचिरे गन्धारविषये च सः ॥ २३ ॥

निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः ।
पुनरायान्महाबाहुरयोध्यां केकयीसुतः ॥ २४ ॥

तथाच भरताक्रमणात् पूर्व्वं युगे वितस्तानद्याः पश्चिमतः पञ्चगौरानाम्ना सुप्रसिद्धं प्रदेशं यावत् संनिविष्टस्य सिन्धुमहानदोपलक्षितस्य प्रदेशस्य सिन्धुदेशत्वं गन्धर्वदेशत्वं चोपपद्यते । अतस्तत्रैव क्वचित् प्रदेशे पुराऽस्य पुरूरवसः प्रतिष्ठानपुरमासीदिति संभावयामः ॥ २ ॥

अपि च तेषां गन्धर्वाणां वर्द्धमानपुरनाम राजधान्यासीदाभस्यास्मिन् युद्धविध्वंसात् तस्मिन्नेव स्थाने तत् प्रत्यासन्ने वा क्वचित् स्थाने पश्चात् पुष्कलावती नाम नगरी भरतेन प्रतिष्ठापिता । सेयं पुष्कलावती पुष्करावती पुष्कलावतं पुष्करावतमिति चान्यत्रान्यत्र पठ्यते । सैव तु मन्ये सिकन्दरग्रन्थे पुकेला ओती, पाली भाषा ग्रन्थे पुष्कला ओतो, एरिअन् ग्रन्थे पुकेल्ल् इति पाली भाषायां पुक्लू इति च तन्निवासिनो लोका उच्यन्ते । एरियन्ग्रन्थे चैतस्याः पुष्कलावत्याः स्थाने पुराकाले कस्यचिन्नगरस्यावस्थानमष्टिशब्देन निर्दिश्यते । तदिदं हस्तिनगरं नाम प्रतिपद्यते । हस्ति=अस्ति=अष्टि=अष्ट इत्येवं हस्तिशब्दापभ्रंशरूपस्याष्टिशब्दस्य संभाव्यमानत्वात् । स्वात् नाम्नेदानीं प्रसिद्धा सुवास्तुर्नाम नदी पञ्चगौराप्रदेशस्थया गौर्य्या नद्या संयुज्यते । सा च सुवास्तुर्यत्र कुभया संयुज्यते ततः संगमस्थानादुत्तरतो गौर्याः प्राक्कूले तदिदं हस्तिनगरं पुरासीत् । इदमेव हस्तिनगरं तन्नागाह्वयं पुरं संभाव्यते यत्रावस्थितस्य पितुरायुमहाराजस्य संनिधौ पुरा सदारो नहुषः संजग्मे । यथोक्तं पाद्मे—

"ऐन्द्रेणापि स दिव्येन स्यन्दनेन वरेण च ।
नागाह्वयं पुरं प्राप्तः सर्वशोभासमन्वितम् ॥

इदमेव च हस्तिनगरं तद् गजसाह्वयं पुरं स्यात् यत्र पुरा मात्रा शकुन्तलया सह भरतो दौष्यन्तिः पितरमाजगाम । यथोक्तं शकुन्तलोपाख्याने महाभारते—

"शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम्" ।
आजगाम ततः सुभ्रूर्दुष्यन्तं विदिताद्वनात् ॥ इति ॥

अस्यैव च हस्तिनगरस्य प्रातिरूप्येण पश्चाद्धस्ती महाराजो भागीरथीतीरे कुरुदेशे नवीनमन्यदपि हस्तिनापुरं विनिर्ममे । तदित्थं द्विविधं हस्तिनगरमुपपद्यते । हस्तिराजतोऽर्वाचीनं कुरुदेशे हस्तिराजतः प्राचीनं तु गान्धारदेशे इति । उभयं चेदं हस्तिनगरं गंगाया उपकूले संनिविशते । तथाहि द्विविधा जाह्नवी भवति । कुरुदेशवाहिनी सुप्रसिद्धा भागीरथीगङ्गान्या गान्धारदेशवाहिनी च गौरीनाम्नी गङ्गान्या तत्र गौर्य्या गङ्गायाः कूले तत्प्राचीनं हस्तिनगरमासीदिति सिद्धान्तः ॥

ननु गान्धारदेशे गङ्गायाः प्रत्यासत्तिर्न प्रसिद्ध्यति । चतुर्णां स्रोतसां सप्तस्रो-

तस्यां मन्दाकिन्यादीनामेव वा गङ्गात्वेन लोके वेदे च प्रतिपन्नत्वादिति चेदत्रोच्यते महाभारतभीष्मपर्वणो नवमाध्याये भारतवर्षस्थनदीगणनायाम्—

"वास्तुं सुवास्तुं गौरीं च कम्पनां सहिरण्वतीम्। वरां वीरंकरांचापि पञ्चमीं च महानदीम्"—इत्येवं कतिपयनदीसहचारेण पठिता पञ्चगौराप्रदेशस्था सुवास्तुर्नामनदी गौर्य्या संयुज्य कुभयापि संयुज्यते। तत्रेयं गौरी गङ्गानाम्ना पुरा प्रसिद्धयतिस्म। अतएव गङ्गा सहस्रनामसु स्कन्दपुराणे गौर्य्या नाम निर्दिश्यते—गङ्गा गंधवती गौरी गन्धर्वनगरप्रियेति (काशीख० २४ । ४६)। यत्तु गौरीं गौरवर्णां पार्वतीं वा गौरीशब्देन कश्चित् प्रतीयात् तत्तुच्छम्। गन्धर्वनगरप्रियेति संनिहितपदोपस्थापितायां गन्धर्वनगरप्रत्यासन्नायां गौरीनद्यां बलवदुपस्थितौ तस्यार्थान्तरे तात्पर्योन्नयनायोगात्। तस्याश्च नद्या गङ्गानामत्वेनोपादानमवश्यं पुरायुगे गङ्गात्वेन व्यवहारं स्मारयति। तस्या गङ्गात्वेनापि स्मरणादेव तदासन्नप्रदेशस्य जाह्नवप्रदेशेन प्राचां व्यवहारं विश्वकोशकारो वसुदासः प्राह। जाह्नवीतीरस्थो जाह्नवप्रदेशः खल्वद्यतनवृनारप्रदेशाद्वणु शब्देन वेदप्रसिद्धादुत्तरतः पञ्चगौराप्रदेशात् पूर्वतः सिन्धुप्रदेशात्तु पश्चिमतः संनिविशते॥ इति॥ तेनैतस्या गौर्य्या एव नद्यास्तदासन्नाया वा कस्याश्चिदन्यस्या जाह्नवीशब्देन वैदिकयुगे व्यवहार आसीदिति प्रतीयते। ननु—"पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम्" इति हि जाह्नवीतात्पर्येण जह्नावीशब्दो वेदे पठ्यते। विश्वामित्रस्य चेयमुक्तिरस्ति। तस्य च पश्चाद्ब्रह्मर्षिभूतस्य पुरा राजत्वकाले गाधिपुरे महोदयनाम्नि निवास आसीत्। तच्च पुरमवश्यं प्रसिद्धाया जाह्नव्याः कूले वर्तते इत्येतदभिप्रायेणैवैतस्य मन्त्रस्य तात्पर्यं संभवति सुवास्तुनद्याः संनिहितायाः कस्याश्चिन्नद्या जाह्नवीत्वं न प्राप्नोतीति चेत्। अत्रोच्यते। संभवत्येवं तन्मंत्रस्य प्रसिद्धजाह्नवीपरत्वं तथापि वणु प्रदेशादुत्तरप्रदेशस्य जाह्नवत्वमपि नतरामपह्नोतुं शक्यते। लम्बाकाः शूलकाराश्च चुलिका जाह्नवैः सहेत्येवं (मार्क० ५४ । ४०) मार्कण्डेयपुराणवायुपुराणविष्णुपुराणादिषूदीच्यदेशानां गणनायां जाह्नवप्रदेशस्य पठितत्वाद् भारतवर्षोत्तरसीमासंनिधानेन जाह्नवप्रदेशस्याभ्युपगन्तव्यत्वात्। न च तत्र पुस्तकान्तरे जागुडैः सहेति पाठान्तरदर्शनाज्जाह्नवशब्दो भ्रान्तपाठ इति वाच्यम्। गौर्य्यां गङ्गात्वस्य संदिग्धत्वेऽपि सिन्धुनदस्य पुराणेषु स्पष्टं गङ्गात्वोपपादनात् तत्संबन्धेनापि तत्प्रदेशस्य जाह्नवत्वसंभवात्। तथा चोक्तं पाद्मे तृतीये स्वर्गखण्डे तृतीयाध्याये, महाभारतभीष्मपर्वणि षष्ठाध्याये च—

"अभ्युत्तरेण कैलासं मैनाकं पर्वतं प्रति।
हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः॥ १॥
तस्य पार्श्वे महद्दिव्यं शुभ्रं काञ्चनवालुकम्।
रम्यं विन्दुसरो नाम यत्र राजा भगीरथः॥ २॥
द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः।
तत्र दिव्या त्रिपथगा सप्तधा प्रतिपद्यते॥ ३॥

वस्वोकसारा नलिनी पावनी च सरस्वती ।
जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी ॥ ४ ॥
एता दिव्याः सप्तगङ्गास्त्रिषु लोकेषु विश्रुताः" ॥ इति ॥

रामायणेऽपि बालस्य द्विचत्वारिंशाध्याये—

"विससर्ज ततो गङ्गां हरो विन्दुसरः प्रति ।
तस्यां विसृज्यमानायां सप्तस्रोतांसि जज्ञिरे ॥ १ ॥
ह्लादिनी पावनी चैव नलिनी च तथैव च ।
तिस्रः प्राचीदिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥ २ ॥
सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रश्चैता दिशं जग्मुः प्रतीचीं तु दिशं शुभाः ॥ ३ ॥
सप्तमी चान्वगात्तासां भगीरथरथं तदा" ॥ इति । १ । ४३ ॥

अतएव गौरीसंबन्धाद्वा सिन्धुसंबन्धाद् वा गङ्गाया गान्धारीत्वमाहुः । यथोक्तं सहस्रनामसु—"गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा" ( काशी ख० २६ । ५१ ) इति ॥

न च भागीरथ्या अलकनन्दाया मन्दाकिन्या वा गङ्गाया गान्धारदेशस्थत्वं दृश्यते । नापि गान्धारीति नामकरणमसम्बद्धप्रलापमात्रं वक्तुं युज्यते । तस्माद् गान्धारदेशेऽस्मिन् गङ्गाया जाह्नव्याः प्रत्यासत्तिरनुमीयते । अपि च पञ्चकोश इति प्रसिद्धमण्डलस्य पञ्चगौरत्वं वक्तुं शक्यते ॥

तेन तद्देशस्य तादृशनामकरणानुरोधेन तत्रत्यानां पञ्चानां स्रोतसां गौरीत्वं पुरा व्यवहृतमासीदिति प्रतिभा कुतर्क्यते । पञ्चभिर्गौरीभिः कृतस्य देशस्य पञ्चगौरत्वोपपत्तेः तत्र तुष्टा मासुसतु सुवास्तु गौरी कुभा—नाम्नां पञ्चस्रोतसां गौरीत्वे प्रतिपन्ने प्रकृताया गौर्य्या गौरीव्यतिरिक्तनामान्तरं नयन्तरं वदपेत्यते ॥

तत्र पञ्चकोशप्रदेशस्य जाह्नवत्वान्यथानुपपत्त्या तत्प्रदेशस्थायाः कस्याश्चिन्नद्या जाह्नवीत्वे वाच्ये तस्या गौर्य्या एव जाह्नवीत्वं स्वरसत उपपद्यते । तथा चैतस्या गौर्य्या नद्या वामे कूले प्रागुक्तभट्टिशब्दोपपन्नं हस्तिनगरं जाह्नव्या उत्तरे कूले सम्पद्यते ॥

नहुषप्रत्यागमनसमये च हस्तिनगरेऽवस्थितस्यायुमहाराजस्य प्रतिष्ठानपुराधिष्ठातृत्वं मन्यंते तेनैतद् द्विविधमपि नगरं तस्यायोर्निवासस्थानं गम्यते । अवश्यं चैतत् नगरद्वयमतिप्रत्यासन्नसन्निविष्टं विज्ञायते । अथवा पुरायुगेऽसुराणां राजकीयनियमानुसारेण प्रायः सर्वेषामेव प्रतिष्ठितानां राज्ञां पुरत्रयं पुरद्वयं वा राजधानीत्वेन सन्निविष्टं भवतिस्म । तत्सादृश्यादस्यापि पुरूरवसो गन्धर्वराजस्य पुरत्रयं राजधान्याऽऽसीत्—प्रतिष्ठानं वर्धमानं हस्तिनगरं चेति । अत्यासन्नान्येव चैतानि त्रीणि

पुराणि भवेयुः। स्वेच्छयाऽन्यतमे पुरे यथा कालं राजाऽवतिष्ठते स्म। तथा चैषां त्रयाणामत्यासन्नत्वनियमात् तस्या एव जाह्नव्या उत्तरे कूले क्वचिदस्य प्रतिष्ठानस्यापि सत्ता लभ्यते।

अपि च—आसीत्पुरायुगे गणशब्देन प्रसिद्धानां केषाञ्चिज्जातिविशेषाणां हिमवत्प्रदेशे सन्निवेशः। दैव्ये युगे ते गणा रुद्राधीना आसन्। प्रमथाधिष्ठितैर्गणैरुपकृता काचिद्देवसेनाऽप्यासीत्। तेषामध्यक्षो रुद्रपुत्रो विनायक आसीत् तेनासौ गणेश इत्युच्यते स्म। तेषामेव गणानामपकृष्टतया केचिज्जातिविशेषा गणसैन्यादपेता वा उत्तरे कालेऽपगणशब्देन प्रसिद्धा भूत्वा पश्चाच्छब्दाऽपभ्रंशवशादफगानशब्देन प्रसिद्धा बभूवुः। तेषामेव किञ्चिद्राज्यसंख्यामण्डलं महाभारतयुद्धकाले गणराष्ट्रशब्देनाख्यातमासीत्। ते चेमेऽनार्यजातीया गणा देवयुगादारभ्येदानीं यावद् क्षुण्णा एकस्मिन्नेव पार्वत्यप्रदेशे तिष्ठन्ति। ते च पूर्वं रौद्रा रुद्रोपासका आसन्। कालक्रमेण धर्मभ्रष्टा भूत्वेदानीं महम्मदमतानुयायिनो म्लेच्छधर्माणो दृश्यंते। एषामेव केचिदरण्यवासिनोऽसभ्याः पुरा देवयुगे भूयसोपद्रवकरणस्वाभाव्यादपराधिनः सन्तः पश्चात् म्लेच्छप्रचलितभाषायामपभ्रंशवशादफरीदिन उच्यन्ते स्म। अपराधिन एवैते भाषादोषादफरीदिनः स्युरिति मन्यामहे। तेषामेव केचिद्रेशिवंशधराः क्रमेण सभ्या भूत्वा प्रतिष्ठानपुरवासित्वात् प्रतिष्ठानशब्देन प्रसिद्धाः पश्चात् पठानशब्देन व्यपदिश्यन्ते स्म। प्रतिष्ठाननगरध्वंसोत्तरमप्येते प्रतिष्ठानशब्देनैव चिरात्प्रसिद्धेरद्यापि पठानशब्देनैवोच्यंते। तत्राऽफरीदिनो नामापराधिनस्तेऽपकृष्टतमत्वात् रौद्रत्वाच्च दस्युप्रायाः अद्यापि तत्रैव श्वेतगिरिसमीपे वने निवसन्ति। अफगानत्वेन प्रसिद्धास्तु सभ्यतामागता ग्रामनगरादि निर्मातारो राज्यशासनान्तर्गताः कथंचित् साधुवृत्तयस्तिष्ठन्ति। तत्रैतेषां दस्युप्रायजातिविशेषाणामपराधिनामत्रैवोज्झिहानप्रदेशे पर्वतप्राये निषधपर्वतात्पूर्वतो गान्धारप्रदेशोत्तरसीमासु भूयसा सञ्चारः पुराकालादिदानीं यावद्दृश्यते। वर्तमानकालवत् पुरादेवयुगेऽप्येते चित्रालप्रदेशादारभ्य लद्दाख शब्देन प्रसिद्धं हाटकप्रान्तं यावत् सन्निविष्टा आसन्।

अफरीदिसंज्ञयेदानीं प्रसिद्धानां तेषामपराधिनां पुरा दैव्ये युगे सिन्धुनदपश्चिमप्रान्तवासिभिः कुत्स—दशद्युश्वैत्रेयादिभिरार्य्यभूपालैः सह भूयान् विरोधः क्रमेणाऽऽसीत्। तत्र—कुयव—शुष्ण—पिप्रु—मृगयादयः केचिद् दस्यवस्तेषां भूपालानां सर्वस्वमपजह्रुः। ततः कुत्साभ्यर्थनया तदानीं वैकुण्ठो नाम देवेन्द्रः स्वर्गाधीश्वरः स्वर्गादागत्य तान् कुयवादीन्निहत्य कुत्सादीनां सर्वस्वं कुत्सादिभ्यः प्रत्यर्प्य रक्षां चक्रे—इत्येतत् कुत्सोपाख्यानं वेदप्रसिद्धमृग्वेदे प्रथममण्डले त्रयस्त्रिंशे षट्पञ्चाशे त्रिंशतचतुःशते द्वादशशते वा सूक्ते, चतुर्थमण्डले तु षोडशे सूक्ते तथा दशममण्डलस्यैकोनपञ्चाशे सूक्तेऽन्यत्रान्यत्र च देवेन्द्रवाक्यात् कुत्सवाक्याद् वामदेवहिरण्यस्तूपादिवाक्याच्चाध्यवसीयते। तदेतदिह स्पष्टप्रतिपत्त्यर्थमेषां सूक्तानां तात्पर्य्यार्थमात्रं पृथक् संकलय्य प्रदर्श्यते—

सिन्धुनदस्य पश्चिमप्रान्तेऽस्मिन् गंधर्वदेशे प्रचलितभाषायां 'अर्गनदार'-नाम्ना सुप्रसिद्धा काचिदर्जुनी नाम नदी वहति। तस्याः कूले पुरा युगे वेतसु नामा कश्चिज्जनपद आसीत्। तस्याधिष्ठाता कथंरुरुनायकः कश्चिदासीद्राजर्षिः। तस्य पुत्रः कुत्सो नाम राजर्षिः क्षत्रियोऽपि सन् कविर्महाविद्वानासीत्। स हि सिन्धुकूलनिवासिभिर्वसिष्ठ—श्रुतर्य्य—नर्य्यप्रभृतिभिर्ब्रह्मर्षिभिः साकं संभूय सूर्योपासनार्थं प्रवर्तमानः उषसः सूर्य्यस्य गवाश्च तत्वविज्ञानार्थं सूर्य्य नाम किञ्चिदधिष्ठानं सरस्वतीकूले विनिर्ममे। पुरा युगे द्वे सरस्वत्यौ ब्रह्मर्षिजुष्टे बभूवतुः प्राचीसरस्वती सिन्धुसरस्वती च। तत्र शतद्रुः प्राच्यां प्राची सरस्वती दृषद्वत्या संयुज्यते। अथ वितस्तासिन्ध्वोरन्तरे शरयूसहिता काचित्सरस्वती वहति। सा सिन्धुयोगात् सिन्धुसरस्वतीनाम।

सरस्वती सरयुः सिन्धुरुर्मिभिर्महो महीरवसा यन्तु वक्षणीः। देवीरापो मातरः सूदयित्न्यो घृतवत्पयोमधुमन्नो अर्चत। (मं० १० सू० ६४)"

इति मन्त्रे तस्या एवोल्लेखात्। अद्यापि तासां तत्रोपलब्धेश्च। अस्याः सरस्वत्याः काश्मीरादुत्तरतो विन्दुसरोवर एवोत्पत्तिस्थानमिति मात्स्ये (१२०। ६४) व्याख्यातम्। पारसीकानां ग्रन्थे चेयम्—'हरकु इति' शब्देनोल्लिख्यते। एतस्या एव सरस्वत्याः कूले कुत्सनिर्मापितं सूर्य्यमन्दिरमासीत्। तदभिप्रायेणैव स्कन्दपुराणे प्रभासखण्डे गान्धारदेशे क्षोभणादित्यो नाम देवता निर्दिश्यते क्षोभणादित्यस्य तत्वान्यत्वयोः सन्देहेऽप्यत्र पुरा सूर्याधिष्ठानमासीदिति ऋग्वेदस्य प्रथममण्डलस्य चतुश्शत (१०४) सूक्तवाक्यादध्यवसीयते। तत्राऽवश्यं सूर्यप्रतिमा सम्भाव्यते। अन्यथा नैतदधिष्ठानं सूर्यशब्देन तत्र व्यपदिष्टमभविष्यत्। बृहस्पतिश्चैतस्मिन्—अधिष्ठाने ब्रह्माऽसीत्। तदनुगामिनोऽन्ये ब्रह्मकर्माण्यकुर्वन् तत्राऽधिष्ठाने सूर्योदयात् प्राग्वर्तिप्रकाशविशेषरूपाया उषसस्तथा सूर्य्यबिम्बप्रभासस्य तथा दिवानक्तं वा चन्द्रादिषु वायौ वा प्रतिनिविष्टव्यापृतानां सूर्य्यगवाश्च सम्बन्धेन विज्ञानानि विज्ञातुं परीक्षितुं चोपासनाविशेषाः प्रवर्तन्तेस्म। किन्तु वैदिकधर्मं श्रद्धामनादधाना अब्रह्माणः केचन दस्यवस्तेषां कुत्सादीनां शत्रवो बभूवुः। अत्युग्रप्रकृतयो विद्रोहप्रधाना युद्धाय सन्नद्धा हत्यापरायणाः अतिदुष्टास्त एवाफरीदिशब्देन म्लेच्छभाषायां प्रसिद्धाः। अपराधिनो दस्यवः पूर्वयुगादेवात्र काश्मीरात् पश्चिमोत्तरे सुविषमप्रचारे दुर्गमपर्वतप्रान्तेऽतिनिगूहितगहनाङ्गणे श्वेतगिरेः पूर्वोपत्यकाप्रदेशे भूयसा निवसन्तिस्म। अनेकश्रेणिविभक्तानां तेषां सन्निकृष्टविप्रकृष्टा अनेके ग्रामास्तत्र तत्रातिनिगूढे पार्वत्यप्रान्ते क्वचिदासन्। तेषां दासैः सुरक्षितास्ते ग्रामाः कृतप्रयत्नैरप्यधिगन्तुं दुःशकमासीत्। अपि चैषां प्रत्येकश्रेणीष्वैकैक्ये प्रमुखा महावीरा आसन्। ते यथा—शम्बरः[1], कुयवः[2] शुष्णः[3], पिप्रुः[4], मृगयः[5], सुशुशुवान[6], अहिः[7], रौहिणः[8], व्यंसः[9], तुग्रः[10], स्मदिभः[11], वेशः[12], पडगृभिः[13], चुमुरिः[14], धुनिः[15] अलकः[16], इत्यादयः। शम्बरश्चैषां सर्वप्रधानः। कुयवादयोऽपि सर्वे स्वतन्त्रधर्माणतर,

स्तद्ग्रामप्रमुखा आसन् । तदनुगामिनो लक्षाधिकसंख्या दस्युजातीयाः सर्वेऽपि दासा उच्यन्तेस्म । तेषां दासानां बलेन बलवन्तस्ते शम्बरकुयवादयोऽत्युग्रकर्माणो दुराधर्षा बभूवुः । एत एव सर्वे सान्निध्यवशात् गन्धर्वदेशवासिभिरार्य्यैः सह तत्तत्कर्मसु विशिष्य विद्रोहमाचरन्तो बहुधा श्रूयन्ते । तत्रैव प्रान्ते दशद्युर्नाम कश्चिद्राजाऽसीत् । श्वैत्रेयश्चाऽन्यः कश्चिदासीत् तावुभौ सुचिरमेभिर्दस्युभिर्नियुध्य पराभूतौ बभूवतुः । अथ तेषु मृगयः श्रुतर्वाणं पड्गृभिः शुष्णश्च सव्यम्—वेशः पौरूरवसमायुमहाराजं—चुमुरिधुनिश्च दभीतिराजर्षिं तथा तुर्वीतिं ध्वसन्ति पुरुषन्ति च—पिपुमृगयः शूशुवांश्च ऋजिश्वानं वैदथिनं च भूयो भूयो बहुभिः प्रकारैः काले काले प्रपीडयामासुः । कुयवः, शुष्णः, पिप्रुः, तुग्रः, स्मदिभश्चेत्येते दुष्टा अपराधिनो दस्यवो बलादाक्रम्यैषां कुत्सवसिष्ठादीनां तत्सूर्यमधिष्ठानं विनाशयामासुः । कुत्सस्य गृहाभिजनवासस्थानादीनि नगरग्रामक्षेत्रशस्यादीनि गवाश्वपश्वादीनि परिभोग्यान्नवस्त्रादीनि जीवनोपयोगीनि वेशभूषापरिच्छदादीनि च सर्वस्वमेवापहृत्यैनं वेतसजनपदान्निष्कासयामासुः । सिन्ध्वादिप्रस्रवणेभ्यो जलग्रहणमप्येते कुत्सवसिष्ठादयो न कर्तुं पारयामासुः । कुयवोऽयमतिदुष्टात्मा वेतसुजनपदात्कुत्समपसार्य्य तस्मिन् जनपदे रक्षकतया तुग्रस्मदिभौ नियोजयामास । तथैषां कुत्सादीनां जलाशयेभ्यो जलग्रहणप्रतिषेधकर्मणि पुनः शुष्णं पिप्रुं च नियोजयामास । कुयवः पुनरन्यदेषां सर्वस्वं सर्वमेवापहृत्य कुत्सं गन्धर्वदेशात् ताडयामास । तेनाऽयं कुत्सोऽति विह्वलो भूत्वा तैः प्रबलैः शत्रुभिः सह संग्रामे स्वयमशक्तः प्रबलपराक्रान्तं कञ्चित् स्वरक्षकं व्यचिन्तयत् । तत्र संनिहितोऽपि पुरूरवसः पुत्रः सम्राडायुस्तेषां दमने कथंचित् समर्थोऽपि शान्तस्वभावो दयालुवृत्तिः प्राणिहत्याप्रधाने नियुद्धे सहसा न प्रवर्तते । इत्यालोचयन्नेष कुत्सो राजर्षिरन्यानात्मरक्षकानदृष्ट्वा स्वयममरावतीं देवपुरीं गत्वा स्वराजं देवेन्द्रमेव दस्यूनां दमनार्थमभ्यर्थयामास ।

इन्द्रः स्वाराडित्येकोऽर्थः । स्वाराट् च बहूनां सम्राजामेकोऽधिपतिर्भवति । सर्वे सम्राजस्तस्याऽधिपत्यं स्वीचक्रुः । किन्त्वसुराः पणयो दस्यवश्चैते त्रयः केवलमस्य स्वराजो देवेन्द्रस्य शासनमस्वीकुर्वन्तो विप्रतिपन्ना आसन् । काले काले तेषां दमनाय स्वर्भगवान् इन्द्रः शतचक्षुष्मान्नित्यं संनद्ध आसीत् । बहव श्चेन्द्राः पर्य्यायक्रमेण देवलोकेऽमरावत्यां राजधान्यां राजसिंहासनमलंचक्रुः । तेष्विदानीं कुत्साभ्यर्थनकाले स्वाराज्यसिंहासने वैकुण्ठोनाम देवेन्द्र आसीत् ।

स कुत्समुखेन दस्यूनां तेषामत्युग्रतां तत्कृतामत्याचारपरम्परां चाकर्ण्य धर्म्यप्रजानुग्रहार्थं दुष्टात्मनिग्रहं स्वकर्तव्यं पश्यन्नेषां विनाशमैच्छत् । अराजकानामेषां दस्युकुलानामविदितगृहाणां चौरोचितवृत्त्या विलुण्ठ्योल्लुण्ठ्य निर्गच्छतां दृश्यादृश्यानां राजोचितं सांप्रतिकयुद्धमर्य्यादया नियुध्य निग्रहणं नावकल्पते इत्यालोच्य स्वयमेव तस्मिन् श्वेतगिरिप्रान्ते गत्वा तद्देशोचितं तत्समयोचितं तज्जात्युचितं च दमनप्रकारं परामृश्य तेषां निग्रहं करिष्यामीत्यध्यवसाय तेन कुत्सेन सहैव द्रुतवेगिहयारूढः स्वयं संप्रतस्थे । देवसेनासु च बहुविधास्वप्येकां मारुतीमेव

सेनां पृष्ठतस्तत्रायातुमाज्ञापयामास। तत्र युद्धप्रदेशे स्कन्धावारे सैनिकाद्यवस्थानार्थं गृहनिर्माणसंभारा भोजनीयाद्यन्नसंभाराः शस्त्रास्त्रसंभाराश्च यथायथं तदनुगता एव तत्रानीयन्त। मरुत्सैनिकागमनत्प्रागेव तीव्रवेगिनाश्वेनाहोरात्रं गच्छता तौ कुत्सदेवेन्द्रौ श्वेतगिरेः प्रत्यासन्ने निषधगिरौ समाजग्मतुः। कुत्सानुमत्या स देवेन्द्रो दस्युशमनोपायपरामर्शार्थं तावत् निषधे विश्रम्य स्कन्धावारं तत्रैव कल्पयामास। अथ कुत्सस्तत्र देवेन्द्रप्रीतये सोमाभिषवरूपं देवभोजनमहोत्सवं महतोत्सहेनातेने सोमदानात्सुप्रसन्नो देवेन्द्रस्तत्र दस्युना ग्रामनगराद्यवस्थानयाथार्थ्यं निश्चेतुं तद्गमनोपायप्रकारं चाध्यवसातुं परामर्शमकरोत्। तत्र कुत्स उवाच। निषधपर्वतात् पूर्वतः प्रवहन्तीनां अञ्जनीकुलिशीवोरपत्नीनां पारे शिफानद्याः प्रत्यासन्ने कुयवग्रामोऽस्ति किन्तु ता अञ्जन्यादयस्तिस्रोऽप्यतितरां दुस्तराः प्रबलजलवेगाः प्राणापहारिण्यः मार्गे प्राप्यन्ते। दासाश्च बहवो मध्येमार्गं मार्गावरोधकाः परानतितरां विद्रावयन्तीति दोषद्वयं कुयवग्रामप्रान्ते प्रयाणे निर्धार्यते। तत्राञ्जन्यादिनदीनिस्तारार्थं पौरूरवसस्यायोर्महाराजस्य राष्ट्रिशूरा नियुज्यन्ताम्। ते हि तत्कर्मणि साधुनिष्णाताः प्रतिपन्नाः सन्ति। अथ मध्येमार्गं मार्गावरोधकानमतिलक्षाणां दानवीराणां व्यामोहनार्थं दासवेषं प्रकल्प्यैते सैनिका मरुतो देवास्तावत् नियुज्यन्ताम्। दासवेषेण तत्र संचरतामेषां मरुतां तत्र कुयवग्रामप्रान्ते सुकरः प्रवेशः संभाव्यते। इत्येवं कुत्सानुमत्यैव तैस्तैः प्रकारैः सर्वमर्थकर्तव्यं तत्रैव परामृश्य प्रतिष्ठमानो देवेन्द्रः सहसा दस्युप्रान्तमाययौ। तत्र च कुयवं प्रतरां निजघान। अथ प्रसुप्तमहिं प्रबोध्य युध्वा पश्चात् रोहिण्यं नामान्यं दस्युराजमपि निहत्य पञ्चाशत्सहस्राणि कदामकुलानि तस्मिन् प्रस्थानप्रक्रमे संहारयामास। शुष्णमप्याक्रम्य बन्धयित्वा कारागृहे निजग्राह। तुग्रं स्मदिभं च प्रोत्साद्य वेतसून् जनपदान् कुत्साय समर्पयामास। वेशातुं निगृह्य च पौरूरवसस्यायोरधीनतायां स्थापयामास। इत्थं सर्वमेषां कुत्सादीनां विनष्टमर्थं पुनः प्रतियादयन्नार्याणां वैभवं बलं चाक्षुण्णं चकार। स देवेन्द्रोऽत्रैव निषधे कुत्सादिभिरार्यैः संप्रतिपूजितः सुप्रसन्नः कुत्सेनानेन राजर्षिणा सह सख्यं चक्रे। स देवेन्द्रोचितवेशभूषादिभिरेनं कुत्सं पुरस्कृत्य स्वरथे कृत्वा सहैव देवलोकममरावतीं प्रति जगाम। स्वागतं कर्तुं नगरोपान्ते समायान्ती शचीन्द्राणी समानवेशभूषापरिच्छदं पुरुषद्वयमिन्द्ररथे समारूढं दूरात् सहसावलोक्य तत्राऽयमिन्द्रोऽयं कुत्स इत्येवमञ्जसा विवेकाभावेन संशयं प्रतिपेदे। तमिन्द्रः स्वगृहे कंचित्कालं सादरमवस्थाप्य पुरस्कृत्य च काले गन्धर्वदेशे वेतसून् प्रतिप्रस्थापयामास। इति हि कुत्सोपाख्यानं भवति। अत्र चाफरीदिशब्देनेदानीं प्रतिपन्नानां गन्धर्वदेशादुत्तरतो निषधपर्वताच्च पूर्वतश्चित्रानदीप्रान्तस्थकान्तारण्यमयपर्वतद्रोणिवासिनां दस्युगणानां निग्रहणे प्रतिष्ठानपुराधिष्ठातुरायुमहाराजस्य नियोगो वेदमन्त्रे श्रूयते। तस्मात्तत्रैव सन्निहिते क्वचित्प्रदेशे प्रतिष्ठानपुरसन्निवेशो लभ्यते इति बोध्यम्॥ ४॥

अपि च वैकुण्ठो नाम देवेन्द्रो वेशं नाम दस्युराजमपराधिनमायोः शत्रुभूतं निगृह्य तत्र पौरूरवस्यायोर्महाराजस्याधीनतायां स्थापयामास। यथोक्तं मन्त्रसंहितायां दशमण्डलस्योनपञ्चाशे सूक्ते—

"अहं रन्धयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक्। अहं वेशं नम्रमायवेऽकरमहं सव्याय पडगृभिमरन्धयम्॥ (१० मं० ४६ सू० ५ ऋ०)" इति।

तथा च तद्दिनादारभ्यैतद्वंशवंशधरा अपराधिनोऽपरीतिनो वा प्रतिष्ठानेऽवस्थानं चक्रुः। तदनुगामिनोऽन्येऽपि कतिपयेऽफरीदिनामानो राजाश्रयत्वमभीप्सन्तः प्रजारूपेण तत्र प्रतिष्ठानपुरे निवसन्तिस्म। आयुमहाराजशिक्षया चैते कथंचित् सभ्याः सम्बभूवुः। त एवैते प्रतिष्ठाननिवासिनोऽपरीतिनः काले प्रतिष्ठानपुरवासित्वात्प्रतिष्ठाना उच्यन्तेस्म। ते च प्रतिष्ठानध्वंसोत्तरं प्रतिष्ठानादन्यत्रोपसर्पमाणा अपि प्रतिष्ठानपूर्वत्वात् प्रतिष्ठानशब्देनैव व्यपदेश्याः सन्तो म्लेच्छभाषया पठान शब्देनाद्यापि व्यपदिश्यन्ते। पठानजातीयास्तु पठानशब्दमेनं पतानशब्दाऽपभ्रंशमाहुः। पतानशब्दश्च म्लेच्छभाषायां नौकाप्रतिष्ठानस्तम्भवंशे प्रयुज्यते। तत्सादृश्येन कस्मिंश्चित् व्यक्तिविशेषे पतानशब्दप्रयोगात् तद्वंशधराणां पतानशब्देन व्यवहारात् काले पठानप्रवृत्तिरभूदित्याहुः। एवमपि नौकाप्रतिष्ठानस्तम्भवंशे वंशस्य प्रतिष्ठानत्वादेव म्लेच्छभाषायां पतानशब्दप्रयोगादन्ततः प्रतिष्ठानशब्दाऽपभ्रंशरूपतयैवास्य पठानशब्दस्योत्पत्तिः सुप्रतिपन्ना भवतीति भाव्यम्। तथा चैषां पठानशब्दप्रतिपन्नानां सभ्यवर्याणां प्रतिष्ठानपुरवासित्वे कथंचित् प्रतिपद्यमाने तदभिजनदेशप्रान्ते तस्मिन् गान्धारदेशे पुरायुगे प्रतिष्ठानपुरसन्निवेशः प्राप्नोतीति बोध्यम्।

अपि च वक्ष्यते। वाह्लीकनगराधीश्वरः कश्चिदिलो नाम राजासीत्। तस्य पुत्रः शशविन्दुर्नाम जज्ञे। जाते पुत्रे स राजेलः पश्चात् मृगयार्थमरण्यमागतः केनचित् दोषप्रसङ्गेनाकस्मात् स्त्रीभावमाजगाम। ततो लज्जावेशाद् वाह्लीकं नगरमगत्वाऽन्यदेवनगरं प्रतिष्ठानपुरं नाम निर्माय तत्र प्रत्यतिष्ठत्। वाह्लीके तु नगरे तस्य पुरः शशविन्दुरस्य राज्यासनमधितष्ठौ। प्रतिष्ठाने तु पश्चादैलेयः पुरूरवा नाम पुत्रो राज्यासनमधितष्ठौ इति हि रामायणे वाल्मीकीये व्याख्यातम्। तेनास्य प्रतिष्ठानस्य ध्रुवमनेन वाह्लीकनगरेण सन्निधानं गम्यते। वनात् प्रत्यावृत्तस्य स्वराज्यसन्निधानेनैव सम्भवतोऽवस्थानौचित्यात्। सन्निहितश्चायं प्रयागाद्यपेक्षया वाह्लीकनगरात् गान्धारदेशः। ननु हिन्दुकुशशब्देनेदानीं प्रसिद्धात् पर्वतादुत्तरतो जम्बूनद्याश्चक्षुरपरनाम्न्याः कूले यः खलु वाह्लीकदेशः प्रसिध्यति न स प्रकृते तस्यैलस्य राजधान्यासीत्। तस्मिन्नेव रामायणेऽपरस्य कस्यचित् वाह्लीकदेशस्य हस्तिनापुरकेकयदेशयोरभ्यन्तरे प्रतिपन्नत्वात्। तथा हि मातृकुले केकयदेशे गिरिव्रजनगरे स्थितं भरतमयोध्यामानेतुं प्रस्थिता राजदूताः हस्तिनापुरे गङ्गामुत्तीर्य पश्चिमाभिमुखाः गच्छन्तः शरदण्डानदीं ततः कुलिङ्गापुरीं तत इक्षुमतीं नदीं ततो वाह्लीकदेशान् ततः सुदामानं गिरिं विपाशां चातिक्रम्य गिरिव्रजनगरमाससाद इति रामायणे स्मर्य्यते। तेन हस्तिनापुरस्यैव वाह्लीकदेशात् प्रत्यासत्तिर्लभ्यते इति चेन्न। सुद्युम्नापरनामायमिलस्तावदिक्ष्वाकोः कनिष्ठभ्राता तत्समकालिकस्यादित्यतोऽतिप्राचीनसमये तस्मिन् नेदं केकयदेशस्थं वाह्लीकनगरं सम्भाव्यते। अन्यथा इक्ष्वाकुसमयादारभ्य रामचन्द्रसमयं यावत्

प्रतिष्ठितस्य तस्य वाह्लीकस्य सर्वत्र भूयसी प्रसिद्धिरभविष्यत्। न चोत्तरमद्र-देशस्थस्य वाह्लीकवदस्य केकयदेशस्य वाह्लीकस्य कचित् प्रसिद्धिरुपलभ्यते। तस्मात् वाह्लीकनगरवासिनां केषाञ्चित् वाणिज्यसम्बन्धेनात्र प्रत्यासन्नानामुपनि-वेशेन कस्यचित्प्रदेशस्य रामचन्द्रसमये वाह्लीकशब्देन प्रतिपत्तावपि नात्र वाह्लीकं नाम नगरमासीत्। वाह्लीके च नगरे स इलो नाम राजाऽऽसीत्। तस्माच्चक्षुर्नदी-कूलस्थमेव तद्वाह्लीकमिह प्रतिपद्यते इति ब्रूमः॥

अथवाऽस्तु केकयात्प्राक्तनो वाह्लीकस्तथापि सन्निधत्ते वाह्लीकनगरात् स गान्धारदेशः। तस्माद्वचनान्तरैकवाक्यताऽनुरोधादस्मिन् गन्धर्वाऽध्युषिते गान्धा-रदेशे एवेदं प्रतिष्ठानपुरं सम्भाव्यते॥ ५॥

अपि च स्त्रीभूताया अस्या इलायास्तदानीं गन्धर्वराजपुत्रो बुधश्चान्द्रिः पति-रासीत्। स स्वराजधानीं वाह्लीकनगरीमगच्छन्त्या इलायाः सौहार्देन स्वदेशे गन्धर्वाध्युषिते निवासं प्रकल्पयेदिति सर्वथा सम्भाव्यते। बुधाश्रमसन्निधाने चैतस्याः पुंस्त्वप्राप्तये स बुधो मरुत्तराजद्वाराऽश्वमेधयज्ञं कारयामासेति स्मर्य्यते। बुधश्च गन्धर्वराजपुत्रत्वात् गन्धर्वदेशीयः। तेनावश्यं गन्धर्वाध्युषिते गान्धारे तदि-लानगरं प्रतिष्ठानमासीदित्यवगम्यते॥ ६॥

तत्र सिन्धुदेशो गान्धारदेशश्चैक एवार्थ इत्येके। अत एव सिन्धुनदात् पूर्वदिक्-सन्निविष्टायास्तक्षशिलायाः पश्चिमदिक्स्थितायाः पुष्कलावत्याश्चाविशेषेण गान्धार-देशान्तर्गतत्वं रामायणे व्याख्यातम्। परे तु सिन्धुनदात् पूर्वो देशः सिन्धुविषयः पश्चिमस्तु देशो गान्धारविषय इत्येवं भेदेनाहुः। तत्र सिन्धुनदात् पश्चिमे गान्धारे येयं पुष्कलावती नगरी प्रसिध्यति तत्रैव भरताक्रमणात्पूर्वकाले वर्धमानं नगर-मासीत्॥

सा गन्धर्वाणां राजधानी भरतेन विध्वंसिता पश्चात् पुष्कलावती नाम्ना परि-णताऽभूदित्याहुः। वर्धमानं चैतत् चन्द्रवंश्यानां राज्ञां पुरा पुरत्रयान्तर्गतमेकं पुर-मासीत्। वर्धमानसान्निध्येनैव च सुद्युम्नेलाभर्त्रा गन्धर्वराजेन बुधेनेदं प्रतिष्ठान-पुरं प्रतिष्ठापितम्॥

यत्रायं पूरूरवा राज्यं चक्रे तस्यैव चेदमन्यदुपनिवेशस्थानं स्वातकाबुल नाम्न्योर्नद्योः सङ्गमस्थानादुत्तरतो गौर्य्याः प्राक् कूलस्थं हस्तिनगरम्। यत्रायोः स-मीपे नहुषो जगाम भरतो वा शकुन्तलया मात्रा सह पितरं दुष्यन्तं जगाम तथा च पुरूरवसो राज्यान्तर्गतमिदं पुरत्रयं पुरत्रयसंनिवेशस्वारस्यात् सन्निहितप्रायमेव स्यादिति पश्यन्ति। सर्वथाऽपि सिन्धुनदात् पश्चिमतो गान्धारदेशे प्रतिष्ठानपुरमा-सीदिति सिद्धम्॥

ननु प्रदर्शितं पूर्वमैतिहासिकानां वचनं यत्र स्पष्टमुत्तरे जाह्नवीतीरे प्रयागे प्रतिष्ठानं प्रतिज्ञायते तदेतत् प्रतिष्ठानस्य गान्धारदेशीयत्वे विरुध्यते—इति चेन्न।

अन्यप्रतिष्ठानपुराभिप्रायेण तदुपपत्तेः। तथा हि—ययातिर्नाहुषः सम्राट् वृद्धावस्थायां संपूर्णं साम्राज्यं पूरुप्रभृतिभ्यः पुत्रेभ्यो यथायथं विभज्य स्वयमस्मिन् गङ्गायमुनासङ्गमस्थाने प्रयागे वानप्रस्थरूपेण न्युवासेत्यैतिहासिकाः प्राहुः। तत्रावश्यमस्य ययातेः सम्राजः किञ्चिदुपनिवेशस्थानं प्रयागप्रत्यासत्त्या प्रक्लृप्तं सम्भाव्यते। प्रतिष्ठानाधिपतिसम्बन्धाच्चैतस्य स्थानस्य स्वयं लोके प्रतिष्ठानसंज्ञा प्रवृत्ता संभाव्यते। क्रमेण सुदृढमूलाया लोकप्रसिद्धेरनुरोधादस्य ययातेरुत्तरकालेपि तत्स्थानं प्रतिष्ठानशब्देनैव व्यवह्रियमाणमासीत्। अतस्तदभिप्रायेणैव तानि सर्वाणि प्रयागप्रतिष्ठानवचनान्युपपाद्यानि। न त्वेतावता प्रयागे प्रतिष्ठानमासीदिति कृत्वा गान्धारदेशे प्रतिष्ठानमासीदिति वक्तुं युज्यते। वाह्लीकानां केषांचिदत्र केकयदेशप्रान्ते वाणिज्यसम्बन्धेन समागत्योपनिविष्टानामुपनिवेशस्थानस्य केकयदेशान्तर्गतस्य प्रदेशविशेषस्य वाह्लीकत्वेन प्रतिपत्तावपि नैतावतोत्तरभद्रदेशस्थस्य प्रधानभूतस्य वाह्लीकनगरस्यापलापः शक्यते कर्तुम्। उभयोः प्रामाणिकत्वेनौचित्यात् तत्र तत्रार्थसमावेशप्रक्लृप्तेः सम्भवात्। तस्मादस्तु ययातेरुत्तरकालं प्रयागेऽपि प्रतिष्ठानम्। किन्तु प्रधानभूतं चन्द्रवंश्यानां राजधानी प्रतिष्ठानं गान्धारदेशे एवासीत्। वंशप्रवर्तकस्य पुरूरवसो गान्धर्वदेशेऽवस्थानप्रसिद्ध्या तत्प्रतिष्ठानस्य गन्धर्वदेशीयतयैव प्रतिपत्तुं युक्तत्वात्।

यत्तु गान्धारदेशस्य द्रुह्युवंशधरेण गान्धारेण विनिर्मितत्वात् तस्य द्रुह्युराज्यान्तर्गतत्वं पूर्वमाख्यातम्। तेनैतस्य पूरोः सम्राजस्तत्र देशे प्रधानराजधानी प्रतिष्ठानं न संभवतीति केचिदाक्षिपन्ति। तदसत्। तेषामैतिहासिकवचनानां गान्धारेण गान्धारनगरनिर्माणे तात्पर्य्यावधारणाददोषात् तदिदं नगरं त्रयस्त्रिंशदक्षांशदेशीयं (षट्षष्टि पश्चिमदेशान्तरे) संनिविशते। तच्च सार्द्धचतुस्त्रिंशदक्षांशस्थाद् (द्वासप्ततितमपश्चिमदेशान्तरस्थाच्च) प्रतिष्ठाननगराद् दक्षिणपश्चिमे संपद्यते। संभवति हि प्रतीच्यमाण्डलिकस्यापि तस्य द्रुह्योर्भ्रातृस्नेहेन पूरोरनुमत्या तदाज्ञया वा पूरुसाम्राज्यान्तर्गते गन्धर्वदेशेऽपि स्वद्रव्यव्ययेन गान्धारनगरं निर्म्माय पूर्वे प्रभवे समर्पणमिति नैतावता गन्धर्वदेशमात्रस्य द्रुह्युराज्यान्तःपातित्वं प्राप्नोति। परानुमत्या परस्य देशेऽपि परेणाऽपि नगरादिनिर्माणस्य केनचिन्निर्बन्धेन संभाव्यमानत्वात्। अथ च क्रमेण प्रसिद्धिं प्राप्तस्य गान्धारनगरस्य सम्बन्धेनैवायं गन्दर्वदेशोऽपि गान्धारनाम्ना प्रसिद्धोऽभूदित्यन्यदेतत्। तस्मान्नैतावता गान्धारदेशे प्रतिष्ठानसत्ता नोपपद्यते—इतिबोध्यम्।

यत्तु अन्तरिक्षचारिणां गन्धर्वाणां विषयेषु गान्धारेषु प्रतिष्ठानपुराभ्युपगमे—

"क्षितावटसि राजेन्द्र अन्तरिक्षे चराम्यहम्"।

इति शकुन्तलावचनं विरुध्यते। प्रतिष्ठानस्यान्तरिक्षवर्तितया दुष्यन्तस्याप्यन्तरिक्षचारित्वोपपत्तेरित्युक्तम्। तदप्यसारम्। मनुष्यजातीयस्त्वमसि। गन्धर्विणीसन्तानत्वाद् गन्धर्वजातीयाऽहमस्मि। मनुष्यास्तु पृथ्वीलोकचारिणोऽ-

च गन्धर्वा अन्तरिक्षचारिण इति जातिमूलकान्तरोपपादने तद्वचनस्वारस्योपपत्तौ निवासस्थानमूलकान्तरोपपादनस्य तत्रानभिप्रेतत्वात्। युक्तं चैतत्। न हि तावद् अटसीति मध्यमपुरुषस्वारस्येन दुष्यन्तव्यक्तेरन्तरिक्षचारित्वप्रतिषेधे तात्पर्य्य-मुन्नेतुं युज्यते। शकुन्तलाजन्मस्थाने कण्वाश्रमेऽन्तरिक्षस्थानस्थेऽप्यस्य दुष्यन्तस्य पूर्वं यातायातोपपादनात्। एवं दुष्यन्तस्य कुलाभिप्रायेणायन्तरिक्षचारि नापवृज्यते। पुरूरवःप्रमुखानां सर्वेषामेवान्तरिक्षे नन्दनवनादौ विहारस्याख्यातत्वात्। एवमेव निवासस्थानाभिप्रायेणापि तदन्तराख्यानतात्पर्यं न संभाव्यते। पुरूरवः-पुत्राणां गन्धर्वलोकविदितत्वस्य लैङ्गादिषूपपादितत्वात्। तस्माज्जात्यभिप्राये-णैवेदमन्तराख्यानं निष्कृष्यते, नव्यक्तचभिप्रायेण कुलाभिप्रायेणाभिजनाभिप्रायेण वेति भाव्यम्। अस्तु वाभिजनाभिप्रायेणाप्यन्तरोपपादनं तथापि स विरोधो नास्ति। इरावतीनिर्गमस्थानाद्धि पृथिव्यन्तरिक्षयोर्विभागोभिप्रेयते। तच्च स्थानं त्रयस्त्रिंशदक्षांशदेशीयम्। प्रतिष्ठानपुरं तु सार्द्धचतुस्त्रिंशदक्षांश-देशीयम्। प्रतिष्ठानपुरं तु सार्द्धचतुस्त्रिंशदक्षांशदेशीयाद्धस्तिनगराद्दक्षिणतः संनिविशते। तथा च पृथिव्यन्तरिक्षदेशवासित्वं नास्तीति युक्तं शकुन्तलाया-स्तदन्तराख्यानमिति सन्तोष्टव्यम्। अपि च-राज्यं स कारयामास प्रयागे पृथिवीपतिरित्येवं हरिवंशे प्रथमपर्वणि षड्विंशेऽध्याये वदता यदिह पुरूरवःप्रभृतेरपि कस्यचित् सम्राजः प्रयागप्रतिष्ठाने राज्यकरणमाख्यायते तत्प्रयागप्रतिष्ठानं तत्संनिहितलोकेभ्यः श्रुतवतां, दूरदेशस्थितं तु गान्धारप्रतिष्ठानमश्रुतवतां केषांचिदैतिहासिकानां भ्रान्तिमूलकं प्रतिज्ञानं स्यादित्युपेक्ष्यते। अथवाऽनेकनदीसंगमात्मकत्वं प्रयागलक्षणमभ्युप-गच्छतां तत्र गन्धर्वदेशेऽपि कश्चिदन्यः प्रयागोऽभिमतः स्यादिति भाव्यम्। अस्ति वा तद्देशेऽपि सिन्धुचक्षुःसीतानां नदीनां सन्निहिता काचिदन्या नदी यमुना नाम तदुक्तं ऋक्संहितायां सप्तममण्डलस्याष्टादशसूक्ते "आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत्। अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि ॥ ७।१८।१९॥" इति। यमुनाप्रान्तवासिनस्तृत्सुप्रान्तवासिनश्च सर्वे देवेन्द्रमप्रीणयन्। अत्र देवेन्द्रे सर्वप्रकारं भेदमत्यजन्। अजाशिग्रुयक्षुप्रान्तवासिनश्च सर्वे राजानः शीर्षवाहचानि चाश्वादियानवाहचानि च द्रव्याणि बलं प्रापयामासुरि-त्यर्थः। तत्र शिग्रुजनपदोऽयं चन्द्रभागाप्रभवोद्‌र्ध्वस्थानगताजनपदादन्य एव स्यात्। चक्षुसाहचर्य्येणाख्यातत्वात्। एवं यमुनापि प्रसिद्धयमुनातो भिन्नैव प्रतीयते। तृत्सुसाहचर्य्येणाख्यानात्। तथा चावश्यं सिन्धुगङ्गायां गौरीगङ्गायां वा संगताया कस्याश्चिन्नद्या यमुनेति संज्ञा संभाव्यते। तयोरेव च संगमस्थानस्य प्रयागसंज्ञापि स्यादिति संभावयामः। तथा च नैतावता प्रयागशब्दश्रवणमात्रेण प्रमाणान्तरसिद्धं प्रतिष्ठानस्य गन्धर्वदेशान्तर्गतत्वमुपक्षेप्तुं युज्यते इति बोध्यम्। अवश्यं चैतदेवमध्य-वसेयम्। अन्यथा पुरूरवःकालादेव त्रिवेणीप्रसिद्धस्य प्रयागस्य प्रतिष्ठानत्वेऽभ्युपग-म्यमाने पुरुं स्वपुत्रं प्रतिष्ठानसम्राज्यसिंहासने प्रतिष्ठाप्य ययातेरत्रप्रयागे वनवास-मुख्या जीवनशेषेऽवस्थानं नोपकल्पेत। प्रयागप्रतिष्ठानस्य साम्राज्यप्रधानराजधानी नगरतया तत्र वनवासकृतेरयौक्तिकत्वात्। अत एवेदं प्रयागमण्डलं तदानीमपि

धर्म्मतीर्थस्थानमरण्यबहुलमेवासीदिति गम्यते। तीर्थबुद्ध्या तत्र कदाचिन्निवसतामपि पौरवाणां प्रधानराजधानी प्रतिष्ठानं गन्धर्वदेशे एवासीत्। अत एव पुरूरवसो गन्धर्वदेशवासित्वमिवास्य पुत्राणामपि तद्देशवासित्वमैतिहासिकैः स्मर्य्यते। यथाह लैङ्गे षट्षष्टितमाध्याये—

"तस्य सप्ताभवन् पुत्राः सर्वे विततेजसः।
गन्धर्वलोकविदिता भवभक्ता महाबलाः"

इति। तस्मात् पुष्कलावती सन्निधाने क्वचित्प्रतिष्ठानपुरमासीदिति निष्प्रतिपक्षं सिद्धम्। इति चतुर्थी प्रतिपत्तिः ॥ ४ ॥

आसां चतसृणां प्रतिपत्तीनां चतुर्थी साध्वी प्रामाणिकप्रबलयुक्त्युपेतत्वादिति वयमध्यवस्यामः।

तदिदं प्रतिष्ठानपुरं केन विनिर्म्मितमित्यत्र मतत्रयं भवति। वैवस्वतनामनुनैवेदं नगरं विनिर्म्माय सुद्युम्नाय स्वपुत्राय समर्पितमिति पराशरः प्राह। यथोक्तं विष्णुपुराणे—

"तत्पित्रातु वसिष्ठवचनात् प्रतिष्ठानं नाम नगरं सुद्युम्नाय दत्तं तच्चासौ पुरूरवसे प्रादात्"—इति। हरिवंशेऽप्येवमुक्तम्—

"वसिष्ठवचनाच्चासीत् प्रतिष्ठाने महात्मनः।
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य कुरूद्वह ॥ १ ॥
तत्पुरूरवसे प्रादाद्राज्यं प्राप्य महायशाः।
सुद्युम्नः कारयामास प्रतिष्ठाने नृपक्रिया ॥ २ ॥

इति। ब्रह्माण्डोपोद्घातस्य तृतीयपादे षष्टितमेऽध्याये चैवमुक्तम्। अथेक्ष्वाकुणा महाराजेनेदं नगरं निर्म्माय स्वभगिन्यै इलायै समर्पितमिति परे प्राहुः। अथ बाह्लीकाधीश्वरोऽयं सुद्युम्नो महाराजः स्त्रीभावमागत्य लज्जावेशाद् बाह्लीकं नगरमगत्वा बहिरेव यत्रावतस्थे तत्रैव तत्प्रीत्या तद्भर्ता बुधो गन्धर्वराजः प्रतिष्ठानं नाम नगरं प्रतिष्ठापयामासेत्युक्तं रामायणे। तदित्थं सर्वैकवाक्यतयाऽयमर्थः प्रतिपद्यते—यत् किल पुरा मनुना सुद्युम्नाय बाह्लीकं नगरं दत्तमासीत्। पश्चात् तस्य स्त्रीभावोत्तरं मनोर्वैवस्वतस्येक्ष्वाकोर्बुधस्य च प्रयत्नादिदं नगरं विनिर्म्मितमासीदिति। इति प्रतिष्ठानपुराख्यानं समाप्तम् ॥ २ ॥

इत्थं चैतत् प्रतिष्ठानपुरस्य निर्म्माणसंबन्धेन मतत्रयमुक्तं भवति। इदं तावत् प्रतिष्ठानपुरं मनुना विनिर्म्माय सुद्युम्नाय दत्तमित्येकम्। इक्ष्वाकुणा विनिर्म्माय स्वभगिन्यै इलायै दत्तमित्यपरम्। मनुना बाह्लीकं नगरं सुद्युम्नाय दत्तमासीत् किन्तु सुद्युम्नस्यैव स्त्रीभावोत्तरमिलानाम्ना प्रसिद्धिरभूत्। ततोबाह्लीकनगरेऽवस्थानमरोचयमानाया इलायाः प्रतिष्ठानार्थं तद् भर्त्रा गन्धर्वराजेन बुधेनेदं

प्रतिष्ठानपुरं निर्म्मितमिति तृतीयम् । तत्राद्ये मतद्वये तावदिलासुद्युम्नयोर्भिन्नत्वं प्रतीयते इति युक्तमुत्पश्यामः । किन्तु तृतीयस्मिन् मते इलासुद्युम्नयोरभिन्नत्वमुच्यते। तन्नावकल्पते । स्त्रियाः पुरुषस्य चैकत्वासंभवात् । अतस्तद्विषयमिदानीं विवेचयामः ॥

इलासुद्युम्नसंबन्धेन तावन्मतचतुष्टयं भवति । ( १ ) वाह्लीकनगराधिष्ठाता तत्रैव राज्यं कुर्वाणः स इलो राजा पश्चादिलानाम्नी स्त्रीबभूव स्त्रीभावोत्तरं तु वाह्लीकं त्यक्त्वाऽन्यत्र प्रतिष्ठानपुरं निर्म्माय तत्र जीवनशेषं यापयामास इत्येकम् ॥

( २ ) प्रतिष्ठानपुराधिष्ठाता तत्रैव राज्यं कुर्वाणः स सुद्युम्नः पश्चादिला नाम्नी स्त्री भूत्वा तत्रैव प्रतिष्ठानपुरे जीवनपर्य्यन्तं राज्यं चक्रे ॥ इति द्वितीयम् ॥

( ३ ) इला ( १–लैङ्गे. अ. ६६ ) तावदियमिक्ष्वाकुप्रभृतीनां ज्येष्ठा भगिनी । सा होतुरपचारात् जन्मनैव स्त्रीरूपा सती पश्चात् मित्रावरुणप्रसादात् पुंस्त्वं प्राप्य सुद्युम्नो नाम भूत्वा पश्चात् शरवणप्रवेशात् पुनरिला नाम्नी स्त्री बभूव । सा पुनः पुरूरवसः प्रयत्नात् पुमानभूत् । दक्षिणदेशीयदण्डकारण्यान्तर्गते प्रतिष्ठानपुरे चैतस्या दायप्राप्तं राज्यमासीदिति तृतीयम् ॥

( ४ ) इक्ष्वाकुप्रभृतीनां ज्येष्ठा भगिनीयमिला प्रतिष्ठानपुराधिष्ठात्री दायप्राप्तेऽस्मिन् नगरे राज्यं चक्रे । सुद्युम्नस्तु तेषां सर्वकनिष्ठो भ्राता । स वाह्लीकपुराधिष्ठाता राजासीत् । किन्त्विलायाः स्त्रीत्वाद राज्यकर्मणि तत्साहाय्यार्थमिक्ष्वाकुणा नियुक्तोऽयं सुद्युम्नः प्रतिष्ठानपुरे सचिवरूपेणावस्थाय चिराय राज्यकर्मसु प्राधान्यमापेदे इति चतुर्थम् । इत्थं चतुर्णां मतानामाद्येषु त्रिषु सुद्युम्नश्चेला चैक एवार्थः सिध्यति । चतुर्थे तु मिथस्तयोर्भेदं पश्यामः ॥

तान्येतानि मतानि क्रमेणोपपादयितुमादौ तावत् प्रथमं मतं वैशद्येन प्रदर्शयामः । रामायणे वाल्मीकीये भगवान् रामचन्द्रः स्वभ्रातृभ्यस्तदिलाचरित्रमाचक्षाणो जन्मनः पुरुषं कर्दमस्य मुनेः पुत्रं वाह्लीकजातीयं कंचिदिलं नाम राजानं वाह्लीकाधीश्वरं शिवकोपात् स्त्रीत्वं गतमाख्याय संवर्तशिष्येण मरुत्तनाम्ना राज्ञ कृतादश्वमेधात् तस्यं पुंस्त्वप्राप्तिमाचष्टे । तथाहि रामायणश्लोकाः प्रदर्श्यन्ते—

"श्रूयते हि पुरा सौम्य कर्दमस्य प्रजापतेः ।
पुत्रो वाह्लीश्वरः श्रीमानिलो नाम सुधार्मिकः ॥ १ ॥
स राजा पृथिवीं सर्वां वशे कृत्वा महायशाः ।
राज्यं चैव नरव्याघ्र पुत्रवत् पर्य्यपालयत् ॥ २ ॥
सुरैश्च परमोदारैर्दैतेयैश्च महाधनैः ।
नागराक्षसगन्धर्वैर्यक्षैश्च सुमहात्मभिः ॥ ३ ॥

पूज्यते नित्यशः सौम्यः भयार्तै रघुनन्दन ।
अबिभ्यंश्च त्रयो लोकाः सरोषस्य महात्मनः ॥ ४ ॥
स राजा तादृशोऽप्यासीद्धर्मे वीर्ये च निष्ठितः ।
बुद्ध्या च परमोदारो वाह्लीकेशो महायशाः ॥ ५ ॥
स प्रचक्रे महावाहुर्मृगयां रुचिरे वने ।
चैत्रे मनोरमे मासि सभृत्यबलवाहनः ॥ ६ ॥
प्रजघ्ने स नृपोऽरण्ये मृगाञ्छतसहस्रशः ।
हत्वैव तृप्तिर्नाभूच्च राज्ञस्तस्य महात्मनः ॥ ७ ॥
नाना मृगाणामयुतं वध्यमानं महात्मना ।
यत्र जातो महासेनस्तं देशमुपचक्रमे ॥ ८ ॥
तस्मिन् प्रदेशे देवेशः शैलराजसुतां हरः ।
रमयामास दुर्धर्षः सर्वैरनुचरैः सह ॥ ६ ॥
कृत्वा स्त्रीरूपमात्मानमुमेशो गोपतिध्वजः ।
देव्याः प्रियचिकीर्षुः संस्तस्मिन् पर्वतनिर्झरे ॥ १० ॥
तस्माद् यजामहे सर्वे पार्थिवार्थे दुरासदम् ।
कर्दमेनैवमुक्तास्तु सर्व एव द्विजर्षभाः ॥ ११ ॥
रोचयन्ति स्म तं यज्ञं रुद्रस्याराधनं प्रति ।
संवर्तस्य तु राजर्षिः शिष्यः परपुरञ्जयः ॥ १२ ॥
मरुत्त इति विख्यातस्तं यज्ञं समुपाहरत् ।
ततो यज्ञो महानासीद् बुधाश्रमसमीपतः ॥ १३ ॥
रुद्रश्च परमं तोषमाजगाम महायशाः ।
अथ यज्ञे समाप्ते तु प्रीतः परमया मुदा ॥ १४ ॥
उमापतिर्द्विजान् सर्वानुवाच इलसन्निधौ ।
प्रीतोऽस्मि हयमेधेन भक्त्या च द्विजसत्तमाः ॥ १५ ॥
अस्य वह्लिपतेश्चैव किं करोमि प्रियं शुभम् ।
तथा वदति देवेशे द्विजास्ते सुसमाहिताः ॥ १६ ॥
प्रसादयन्ति देवेशं यथा स्यात् पुरुषस्त्विला ।
ततः प्रीतो महादेवः पुरुषत्वं ददौ पुनः ॥ १७ ॥

अत्र मरुत्तोऽयमविक्षितः पुत्रः सूर्य्यवंशीयः । तेन मरुत्तेन समकालोयमिलः सुद्युम्नो नेदवाकुसमकाल इति निर्धार्य्यते । पुंस्त्वकाले चैतस्यैलस्य शशविन्दुर्नाम पुत्र आसीन्नतु पुराणोक्ता गयोत्कलविनताश्वा इति च विशेषोऽवधार्य्यते । स्त्रीत्वकाले चैतस्या इलायाः पुरुरवा नाम पुत्रः कार्तिकेयजन्मस्थानस्य श्वेतगिरेः संनिधानेऽभून्नतु पुराणोक्ते कनखलसंनिधाने पुरुपर्वते इत्यपि विशिष्यते इति रामायणीयं प्रथमं मतमुक्तं भवति ॥ १ ॥

एतद्रामायणपाठतः पुरात्वे परोक्षार्थज्ञानसाधनी काचिदावर्तनी नाम विद्या ऋषिषु प्रचरितासीदिति विज्ञायते ॥ २ ॥

सुद्युम्नोपाख्यानम्—तत्र शंखलिखितोपाख्यानम् ॥ अथ द्वितीये तु मते प्रतिष्ठानपुराधिष्ठाता सुद्युम्नो नाम कश्चिन्महाराज आसीत् । ब्राह्मेऽष्टशताध्याये सुद्युम्नोयमिलशब्देन व्यपदिश्यते । अस्यैव सुद्युम्नस्य राज्यशासनकाले शङ्खश्च लिखितश्चेति द्वौ भ्रातरौ तपस्विनावास्ताम् ॥ अलर्कपुत्रो महर्षिर्जैगीषव्यस्तयोः पिताऽऽसीत् । हिमालयराजकन्यानामपर्णैकपर्णैकपाटलानां पार्वतीत्याख्यया प्रसिद्धानां सर्वकनिष्ठैकपाटला पार्वती तयोर्माताऽऽसीत् ॥ तदुक्तं ब्राह्मे द्वात्रिंशेऽध्याये ॥

"सोपि कालेन शैलेन्द्रो मेनायामुदपादयत् ।
अपर्णामेकपर्णां च तथा चैवैकपाटलाम् ॥ १ ॥
उमा तासां वरिष्ठा च महादेवमुपस्थिता ।
दत्तकश्चोशना तस्य पुत्रः स भृगुनन्दन ॥ २ ॥
आसीत् तस्यैकपर्णा तु देवलं सुषुवे सुतम् ।
या तु तासां कुमारीणां तृतीया ह्येकपाटला ॥ ३ ॥
पुत्रं सा तमलर्कस्य जैगीषव्यमुपस्थिता ।
तस्याश्च शङ्खलिखितौ स्मृतौ पुत्रावयोनिजौ ॥ ४ ॥

तयोश्च पृथक् पृथगावसथौ सैतवाहिन्या नद्या उपकूलेऽनतिदूरे सन्निविष्टौ पुष्पफलवृक्षैरतिरमणीयावास्ताम् । तत्र कदाचिल्लिखितो यदृच्छया शङ्खाश्रममाजगाम । शङ्खस्तु कचिन्निष्क्रान्तस्तदानीमाश्रमे नासीत् । भ्रात्रा हीनमाश्रमं दृष्ट्वा तदागमनप्रतीक्षया तत्र स्थातुमीहमानः स कालयापनेच्छया तदाश्रमवृक्षेभ्यः फलान्याहृत्य तत्रैव स्थित्वा विश्रब्धं भक्षयामास । भक्षयत्येव च तस्मिन् शङ्खोऽप्याश्रममाययौ । फलानि भक्षयन्तं लिखितं दृष्ट्वा शङ्ख उवाच । कुत एतानि फलान्याहृतानि, अत्र वा केन हेतुना भक्षयसीति । ततोऽयं लिखितो ज्येष्ठं भ्रातरमुपसृत्याभिवाद्य च प्रहसन्निव विनयेनोवाच—इत एवैतानि मया गृहीतानीति । ततस्तीव्ररोषाक्रान्तः शङ्खोऽब्रवीत्—अदत्तान्येतानि फलानि स्वयमाददानेन त्वया स्तेयमिदमाचरितम् । तेनादत्तादानपापेनाक्रान्तोऽसि स त्वं गच्छ राजानमासाद्य स्वं पापमुक्त्वा पापनिष्कृत्यै तेन कृतं चौरदण्डं धारय । ततस्ते स्वधर्मोऽनुपालितः स्यादिति । इत्थमुक्तः स लिखितः सत्वरं तद्वचनात् राजानं सुद्युम्नमाजगाम । आगतं च लिखितमन्तपालेभ्यः श्रुत्वा सहामात्यः पद्भ्यां बहिरभ्यागत्याभिवाद्य च तेन सहान्तः प्रविवेश । आसनादिभिरभ्यर्च्य सत्कृत्य च तं पप्रच्छ । किमर्थमागमनं तन्मे शंसेति । लिखित उवाच—

"अनिस्पृष्टानि गुरुणा फलान्याहृत्य चाश्रमे ।
भक्षितानि मया राजन् ! तत्र मां शाधि माचिरम् ॥ १ ॥

सुद्युम्नउवाच—

पुष्पमूलफलादीनि वन्याऽपरिवृतानि चेत् ।
निषेधलक्षणाऽभावे गृह्णानो नापराध्यति ॥ २ ॥

वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च ।
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥ ३ ॥
द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ ४ ॥

लिखित उवाच—

"एवमेतद् यथात्थ त्वं किन्तु पापानुषङ्गि यत् ।
तदपापमपि त्याज्यं धर्मशुद्धिमभीप्सता ॥ ५ ॥
यः स्वाम्यदत्तान्यादत्तेऽपहर्ता व्यल्पपि क्वचित् ।
दोषानुदर्शिनी स्तेये बुद्धिस्तस्य श्लथा भवेत् ॥ ६ ॥
एवमाह मम भ्राता ज्येष्ठः शङ्खो गुरुर्मम ।
तथैव श्रूयते धर्मगाथाऽन्यत्र पुरातनी ॥ ७ ॥
ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद्धनम् ॥ ८ ॥

सुद्युम्न उवाच—

"प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्यादेव भूपतिः ॥
स भवानभ्यनुज्ञातो मया दोषात् विमोचितः ।
कामानन्यानतो ब्रूहि करिष्यामि हि ते वचः ॥

लिखित उवाच—

"अदण्डनेऽभिशस्तस्य धर्मे न स्याद् दृढा स्थितिः ।
इच्छामि दण्डमेव स्वं यत्र पश्यामि दुष्कृतम् ॥
भ्रातरं यदि यास्यामि छन्दयमनो ह्यदण्डितः ।
धर्मस्थस्य सततस्तस्य पापबुद्धिर्भवेन्मयि ॥

इत्थं राज्ञा छन्दयमानोऽपि स लिखितो भृशं पातकात् भीतो दण्डमेव वरयामास । ततः सुद्युम्नस्तस्य करौ प्रच्छेदयामास । धृतदण्डस्तु लिखितो भ्रातरं शङ्खं गत्वा क्लेशादार्त उवाच—धृतदण्डोऽस्मि भगवन् ! इदानीं मेऽपराधं क्षन्तुमर्हसि ।
शङ्ख उवाच—

"न कुप्ये तव धर्मज्ञः न त्वं दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥
त्वं सैतवाहिनीं गत्वा तर्पयस्व यथाविधि ।
देवान् ऋषीन् पितॄंश्चाऽथ मैवाधर्मे मनः कृथाः ॥

इत्थं शङ्खाज्ञया लिखितो नदीं सैत्रवाहिनीमवगाह्य तर्पणार्थं प्रचक्रमे। नद्याम-वगाहमानस्य तस्य पुनः प्रागवद्बाहू प्रादुरास्ताम्। विस्मितः स तौ बाहू भ्रातुर्दर्शयामास। शङ्खोऽब्रवीत्। तपसा मया कृतम्। मा ते तत्र विशङ्काऽभूत्। दैवं ह्येदमत्र विहितं द्रष्टव्यम्। लिखित उवाच—

यदीदृशं ते तपसो वीर्यमस्ति स तर्हि कस्मान्नाहं त्वया पूर्वमेव पूतः कृतः किमर्थमहं राजसदनं प्रेषित इति। शङ्ख उवाच—

"एवमेतन्मया कार्यं नाहं दण्डधरस्तव।
इत्थं पूतः स नृपतिस्त्वं चापि पितृभिः सह ॥ १ ॥
गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः।
उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ २ ॥
उत्पथं प्रतिपन्ने तु ब्राह्मणेऽपि त्वयीदृशे।
दण्डेन शासनं कर्तुमधिकारोऽस्ति भूपतेः ॥ ३ ॥

इत्थमाश्वस्तो लिखितः पूतः प्रसन्नः स्वाश्रमं जगाम।

अत्र कश्चिदित्थं प्रत्यवतिष्ठते। यदिदमत्र शङ्खाश्रमे लिखितेनादत्तानि फलान्याहृतानि तन्न धर्मविरुद्धं भवति। पुराकालेऽपि भारतीय धर्मस्मृतिकारैरपहरणीय-द्रव्यप्रकरणे फलमूलादीनां परिगणितत्वात् स्वाम्यनुज्ञाव्यतिरेकेऽपि तदादानेऽपराधाभावात् ॥ यथोक्तं मानवीये—

"वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च।
तृणं च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥

(८। ३३९) द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डं दातुमर्हति (८ अ. ३४१)। गौतमीयेऽपि—

"वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत। फलानि चापरिवृतानाम्"—इति, तथा चानपराधे लिखिताय हस्तच्छेदात्मककठिनदण्डानुज्ञादानं सुद्युम्नस्यापि नावकल्पते इति ॥

तत्र ब्रूमः—व्यवस्थितं हीदं देशकालापायद्रव्यपात्रानुरोधेन धर्मप्रकरणं भवति। तानपेक्ष्यैतानि धर्मो रूपं धत्ते। तथा चेदमादानमस्तेयं द्विधोपपद्यते। निषेधलक्षणाभावात् साधारणीकृतमेकम्। क्षीणवृत्तेरापत्कृतं च द्वितीयमिति। तत्र लिखितस्य क्षीणवृत्तित्वाभावात्फलादानं नापद्धर्मकृतमित्यधर्मः प्राप्नोति। लिखितस्य स्वयं दण्डग्रहणाग्रहेण च शङ्खाश्रमस्थफलानां साधारणीकृतत्वं नासीदिति विज्ञायते। तथा च तदादानेऽप्यधर्मः प्राप्नोति। तस्मादुचितोऽयं सुद्युम्नकृतो लिखितदण्ड इति भाव्यम् ॥

अत्राहुः—अस्ति खल्वन्योऽपि राजा सुद्युम्नो यथा सूर्य्यवंशे युवनाश्वस्य पिता सुद्युम्न इत्युच्यते। तथापि न तत्सामयिकमिदं शङ्खलिखितोपाख्यानम्॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्। इति शान्तिपर्वणि त्रयोविंशाध्याये व्यासेनोक्तेः पुरातनेत्यक्षरस्वारस्यादतत्सामयिकत्वस्यैवावगमात्। युवनाश्वपितुः सुद्युम्नस्य तु वेदव्याससमकालप्रायत्वात्—इति केचित्॥ परेतु युवनाश्वपितुः सुद्युम्नस्यैव संबन्धेनेदं शंखलिखितोपाख्यानमाहुः। तदीयराजधान्या अयोध्यायाः शंखलिखितवनस्थानसंनिहितत्वात्, गन्धर्वदेशीयप्रतिष्ठानपुरस्य विप्रकृष्टत्वाच्च। तत्र तत्वं मृग्यम्। वाराहपुराणोक्तः काशिराजस्य सुप्रतीकस्य कनिष्ठपुत्रस्तु सुद्युम्नो नैतच्चरितनायकः संभाव्यते। तज्ज्येष्ठभ्रातुर्दुर्जयस्य काशिराजस्य महाप्रतापित्वेऽपि तदवरजस्य सुद्युम्नस्य अविशिष्टराजत्वाद् दुर्जयमगत्वा सुद्युम्नं प्रति लिखितगमनस्यासमञ्जसत्वात्॥

अथ यतोऽस्यां सैतवाहिन्यां नद्यामवगाहमानस्य लिखितस्य बाहू प्रादुरास्तां ततस्तद्दिनादारभ्यैवास्याः सैतवाहिन्याः सरितो बाहुदेति नामान्तरं प्रसिद्धमभूत्। इति सुद्युम्नोपाख्याने शङ्खलिखितोपाख्यानम्॥

अथ सुद्युम्नोपाख्याने यक्षोपाख्यानम्—

स एष प्रतिष्ठानपुराधिष्ठाता महाराजः सुद्युम्नोऽत्यन्तं मृगयाव्यसन्यासीत्। स भूयो भूयो मृगयां चरन्नेकदा महत्या सेनया मृगयामाजगाम॥ स हिमालयप्रान्ते बहुव्यालसमाकुलं गहनं वनं परिबभ्राम। तत्र वनोद्देशे परिभ्रमन् मृगान् रुरून् शशान् सूकरान् खड्गान् गवयान् शरभान् महिषान् सृमरान् वनकुक्कुटान् अन्यांश्चैवंविधान् मेध्यान् हिंस्रान् वा पशून् निघ्नन् मनो विनोदयामास। मृगयागतमानसः स कश्चित् कालमटव्यामेव स्थातुं मतिमाधाय राज्यतन्त्रपरिचारकानमात्यानुवाच।

"गच्छन्तु नगरं सर्वे भवन्तोऽवहितेन्द्रियाः।
देशं कोशं बलं राज्यं पालयन्तु यथाक्रमम्॥ १॥
आदायाग्नीन् वसिष्ठोऽपि तथा यातु पितेव नः।
वत्स्यामि मृगयाशीलः कंचित्कालमहं वने॥ २॥
अरण्यभोगभुग्भिश्च वाजिवारणमानुषैः।
मृगयाशीलिभिः कैश्चिद्विना यान्तु परे पुरीम्॥ ३॥

(ब्राह्मेऽष्ट शताध्याये १०८) इत्थमाज्ञप्तास्तेऽमात्याः प्रतिष्ठानमाययुः। स तु राजा सुद्युम्नः स्वयं हिमवन्तं गिरिमेव शनैः प्रायात्। स तत्र कंचित्कालं निवासाय स्वसंनिवेशयोग्यं रमणीयं स्थानमन्वेषयामास। अकस्मात्तत्रातिविशदं राजोचितं गिरिकन्दरं प्राप्य संनिवेशाय मनोदधे। तच्च गिरिकन्दरं समन्युनाम्नः कस्यापि यक्षेश्वरस्य स्थानमासीत्। समानाम्नी च तस्य भार्य्यासीत्। तया सह मृगयाविहाराद्यर्थं स यदा क्वचिदन्यत्र ससार तदानीमेव शून्यं स्थान-

मालोक्य राजा सुद्युम्नस्तद्वासस्थानं रम्यं गिरिगह्वरमकस्मादाचक्रमे। स यक्षः सभार्यः प्रत्यावृत्य स्वस्थानं महत्या सेनया समेतेन राज्ञाक्रान्तं दृष्ट्वा ममेदं स्थानं दीयतामिति राजानमर्थयामास। किन्तु राजदूतेन ताडितः स भूयो व्याकुलश्चिन्तयामास—

"इलं जेतुं न शक्नोमि याचितो न ददात्ययम्।
हृतं गेहं ममानेन हन्त किं करवाण्यहम्॥ १॥

सोऽन्यानपि यक्षानाहूय तानुवाच—

"युद्धे जित्वा च राजानमिलमुद्धतदन्तिनम्।
गृहाद्यथान्यतो याति मम तत्कर्तुमर्हथ॥"

इति। एवमुक्तास्ते युद्धदुर्मदा युद्धार्थमायोजनं कृत्वा राजानमुपेत्योचुः—

"गुहालयोऽयमस्माकं निर्गच्छास्माद्द्रुतं नृप।
नोचेद्युद्धात्परिभ्रष्टः पलाय्य त्वं गमिष्यसि॥

एवं यक्षैरुक्तः स राजा सुद्युम्नः क्रोधरक्तेक्षणो युद्धं कर्तुमारेभे। स महाबली राजा तान् सर्वान् यक्षान् जित्वा दशरात्रीस्तत्रोवास। स तु समन्युर्नाम यक्षो विजितो हृतगेहो दुःखक्रान्तो यत्र तत्र वने विचरन् भूयसा चिन्ताक्रान्तः स्वभार्यां समामुवाच।

"राजायं दुर्मनाः कान्ते व्यसनासक्तमानसः।
कथमायाति विपदं तत्रोपायो विचिन्त्यताम्॥ १॥
पापिनामिह राज्यानि व्यसनान्तानि निश्चितम्।
तस्मात् पापिनमेनं त्वं प्रापयोमावनं प्रति॥ २॥
प्रविशेत्तत्र राजायं स्त्री भविष्यत्यसंशयम्।
पुमानुमावनं गत्वा स्त्रीत्वमेतीति विश्रुतम्॥ ३॥

एवमुक्ता सा समा नाम यक्षभार्या मृगी भूत्वा सुद्युम्नस्य पुरतोऽभवत्। स राजा मृगीमालोक्य तां मृगीमन्वेक एव हयारूढो निर्ययौ। पुराऽत्वे हि यक्षादयो वैज्ञानिका विद्याविशेषप्रभावात् परकायप्रवेशयोन्यन्तरसञ्चारे विग्रहान्तरधारणे च शिक्षिता आसन्। उभयथा चास्या यक्षभार्यायाः मृगीभावः संभाव्यते। परकायप्रवेशविद्यया वा। विग्रहान्तरकृतिविद्यया वा। उभयथाऽप्येतमर्थं भारतवर्षे विद्वांसो नासंभाव्यं मन्यन्ते। अद्यत्वे वेदविद्याविलोपात्तादृशविज्ञानस्याशक्यत्वेऽपि पुराऽत्वे वेदविद्भिः सुकरत्वात्। ये त्विदानीन्तना अदृष्टप्रचारमर्थं सर्वथैवासंभाव्यं मन्यन्ते तेषां बालबुद्धीनां संतोषाय तस्या यक्षभार्याया औपचारिकं मृगीभावं कल्पयामः। यथा हि मृगगृद्धं मृगशाविन

काचिन्मृगी वने दूरं परिसर्पयति। एवमियं समा परमसुन्दरी सौन्दर्य्येण राजानं मोहयित्वा दृश्यादृश्या भवन्ती तं दूरे वनं निनायेति मृगीभावस्य तात्पर्य्यम्। तथा चैष सुद्युम्नश्चन्द्रप्रभं नामातिप्रियं तरस्विनं निजवाजिनमध्यारूढस्तां मृगीभूतां समामनुसरन् वनाद्वनान्तरमनुगच्छन् यदृच्छया कुमारवनमनुप्रविवेश। तस्यैवो-भावनमिति संज्ञान्तरं ग्राह्यं॥ अस्ति हि हिमालयमण्डलान्तर्गत एवोपकल्पितः कश्चिदन्यो मेरुर्नामेति पुराणानुशीलनतोऽवधार्य्यते। तस्यैव च मेरोः सन्निहितप्राये क्वचित्प्रदेशे संनिविष्टमिदमासीदरण्यं कुमारवनं नाम। तत्र कचिद्वकुलैरधिवासितं, कचिद्वा सालैस्तालैस्तमालैश्चम्पकैः पनसैराम्रैर्नीपै-र्मधूकैर्दाऽडिमैर्नारिकेलैः पूगैः खजूरैः शिरीषैरन्यैश्चैवंविधैः पादपैरितस्ततः समाकीर्णं वनखण्डं ददर्श। तत्र तत्र माधवी मण्डपावृतं कदलीखण्ड-मण्डितं यूथिकामालतीकुन्दवल्लीसमावृत्तमासीत्। कचित्की-चकध्वनिनानादितं भ्रमरालीरुतरम्यं कचित् कचिच्चक्रवाकहंसकारण्ड-वादिनानाविधपक्षिकलकूजितरमणीयं वनप्रदेशं ददर्श। तस्यैषोऽतिवि-शिष्टां हृदयग्राहिणीं रमणीयकतामितस्ततोऽवलोकयन् यथेच्छमनुविहरन्नेकाकी दूरोपसृतसार्थवाहो दैवात् कचिदेकत्रातिमनोहरे प्रदेशे प्रविवेश। प्रविशन्नेव तत्क्षणादसौ सुद्युम्नः स्त्रीत्वमापत्। सर्वाणि स्त्रीचिन्हानि तस्य तत्क्षणादजायन्त। अश्वोऽपि तस्य वडवाऽभवत्। द्वित्राः सहचारिणः भृत्या अपि तमनुगताः स्त्रियः समपद्यन्त। समा त्वेषातिसंहृष्टा भूत्वा ततः प्रत्यावृत्य स्वपतिं समन्युं नाम यक्षमागत्य कृतकृत्यतामात्मनो निरूप्य परं हर्षसंवादमश्रावयत्। स्वीयं च स्थानं गिरिकन्दरमप्रतिपक्षमाचक्रमे। सुद्युम्नस्तु राजा स्त्रीभावमागतस्तत्राकस्मादत्यद्भुत-मिदं कर्म दृष्ट्वैवातिचकितः परां व्याकुलतामाप। हन्त! किमेतत् संजातम् किमतः परं करिष्यामि कथं वा स्त्रीत्वमापन्ना राज्यं करिष्यामि। किं मे लोकाः कथयिष्यन्ति। मामित्थंभूतं न लोकाः सुद्युम्न एवायमिति प्रत्यभिज्ञास्यन्ति। कथं वास्मिन्नलौकिके कर्मणि प्रत्ययस्तेषाम्। हन्त! केनाऽहं वञ्चितः कथं भवि-ष्यामि, किं करवाणि, कुत्र गच्छामि" इत्थं बहुविधं विलपन् पुनः पुनरा-श्चर्य्येणात्मानं कलुषयन् न किञ्चित् कर्तुं पारयामास। मृगयाव्यापारं परित्यज्य लज्जया स्वां राजधानीं प्रतिष्ठानपुरमगत्वा तत्रैव तस्माद्वनप्रदेशाद्बहिर्भूय स इतस्ततश्चिन्ताकुलितो विचचार। एतस्मिन्नन्तरेऽकस्मात्तत्र सोमस्य गन्धर्वराजस्य पुत्रो बुधो नाम राजा स्वेच्छया चङ्क्रममाणस्तं प्रदेशमागच्छत्। तामिलां तथा विचरन्तीं तत्र दृष्ट्वैव जातकौतूहलरसो बुधस्तदन्तिकमुपसृत्य पप्रच्छाभिधान-मेकान्तेऽरण्यप्रान्तेऽवस्थाननिदानं च। इलोनामाऽहं सुद्युम्नापरनामाहमित्युक्त्वा सुद्युम्नः पुंरूपस्यात्मनः स्त्रीत्वप्राप्तिमाकस्मिकीमस्मै कथयामास। तदुक्त्या विदित-वृत्तान्तः स बुधस्तामिला त्वमसीत्याख्याय हावभावसंपन्नां तां कामयमानः प्रेम्णा विलोकयामास। अन्योन्यानुरागाच्च तयोस्तत्र संयोगः समपद्यत। इत्थं च बुधा-हितगर्भा सेला स्वकुलाचार्यं वसिष्ठं सस्मार। आगतं च तं पप्रच्छ—"भगवन्! किमित्येतत्। वनं प्रविष्टमात्रोऽहं स्त्रीत्वमापन्नः किमत्रकारणं पश्यसि। यद्यवा-च्यं न स्यात् यदि वा श्रोतुमयोग्यो नास्मि तर्हि तदाख्याय संशयं छेत्तुमर्हसि।

वसिष्ठ उवाच । नाकारणं भवतीह किञ्चिदपि कार्यम् । दूरे च मनुष्यबुद्धे-र्वास्तविका इमे प्रकृतिगता कार्यकारणभावाः । अतश्च तु कादाचित्कविशिष्ट-कारणसमायोगानुरोधेन जायमानः कादाचित्कः परिणामविशेषा लोकैरलौकिक इवाप्रकृत इवाभिपद्यते । विशिष्टप्रतिपन्नास्तु वस्तुशक्तिवैचित्र्याद् योगप्रभाव-वैचित्र्याच्च सर्वं संभाव्यमानं पश्यन्ति । तदाहुः

"गहनः कर्मणां पन्था अपूर्वा वस्तुशक्तयः ।
तासां संयोगवैचित्र्यात्सर्वं भवितुमर्हति ॥ १ ॥
योगेन मानसी शक्तिरुद्बुद्धा कुरुते न किम् ।
अपूर्वं योगसामर्थ्यं योगजं बलमैश्वरम् ॥ २ ॥

इह तावद्--हिमालयपर्वतमालायां मूजवति गिरौ भद्रवटे नाम स्थाने चाऽसौ महायोगिराजः शङ्करः प्रतिवसति । स हि योगप्रभावादणिमाद्याः सर्वाः सिद्धी-रासः सर्वतन्त्रः स्वतन्त्रः सर्वज्ञो यथेच्छं सर्वानेतान् भावाभावान् कर्तुमकर्तु-मन्यथाकर्तुं समर्थ ईश्वरोऽभिज्ञायते । स चैतस्मिन् हिमालयमण्डले पर्वते पर्वते-ऽरण्ये ऽरण्ये यथेच्छं पार्वत्या विहरन् सुखमास्ते । स एकदास्मिन्नेव कुमारवने क्रीडासक्तः पार्वत्या रममाण आस । भर्तुरुत्संगस्थिता च गौरी विवस्त्रासीत् । तस्मिन्नेवान्तरे शिवं साक्षात् कर्तुं सनकादयो महर्षयस्तत्रोपातिष्ठन्त । तान् विलोक्य भृशं व्रीडिता भर्तुरङ्कात् सद्यः समुत्थाय वस्त्रं गृहीतवती पार्वती लज्जया वेपमाना तस्थौ । ऋषयस्तु रमणप्रसङ्गं तयोरालक्ष्यैवातितूर्णं परिवृत्य नरनारायणा-श्रमं जग्मुः । स च शङ्करस्तदानीं कामिनीं कामामाश्वासयन् योग्यसामर्थ्या-द्वनमेतद्पुरुषं कल्पयित्वा रमणीरमणप्रसङ्गे पुरुषान्तरालोकशङ्कामेकान्ततो न्य-वर्तयत् । आह च—

"कार्तिकेयगणेशाभ्यां शम्भुना नन्दिना विना ।
पुमान्न प्रविशेज्जातु कश्चिदस्मिन्नुमावने ॥ १ ॥

( ब्राह्मे १०८) अद्य प्रभृति यो मोहात् पुमान् कोऽपि मयि स्थिते ।
वनं संप्रविशेदेतत् स वै योषिद् भविष्यति ॥ २ ॥

इत्थमेतच्छापदूषितं वनं ये जना जानन्ति ते तद्भीता दूरतः परिवर्जयन्ति । त्वं तु तदज्ञानादिह संप्रविष्टः स्त्रीत्वमापन्नश्चेति । इलोवाच—भगवन् ! यद्येवं तर्हि मम दुःखविमोकाय कञ्चिदुपायमप्यनुजानीहि । भवन्ति खलु निष्कारण-करुणाशरणं महापुरुषाः किमधिकम् मया वक्तव्यम्—सर्वथाहं तवानुग्रहपात्रम्—इत्येवं विलप्य प्रार्थयतः सुद्युम्नस्य तादृशीं दशां दृष्ट्वा दयार्द्रहृदयो वसिष्ठः शंकर-मेव गत्वा पर्य्यतोषयत् । तस्मै तुष्टः स भगवानाह । प्रथमगर्भजननादुत्तरमयं सुद्युम्नो मानवः षण्मासान् पुंस्त्वे षण्मासान् वा स्त्रीत्वे भविष्यति"—इति । स इत्थं वसिष्ठप्रसादात्कथंचिदनुगृहीतोऽभूत् ।

अथ स्त्रीत्वभावप्राप्तौ सत्यामिला नाम भूत्वा बुधाहितगर्भा सा नवमे मासे पुरूरवसं नाम पुत्रं जनयामास ततः सुद्युम्नो मासान्तरे पुरुषो भूत्वा प्रतिष्ठानपुरमासाद्य राज्यं चक्रे। तत्र च स्त्रीत्वमासे हर्म्येषु तिष्ठति। पुंस्त्वमासे तु यथापूर्वं राज्यमनुप्रशास्ति। तेन तस्मिन् समुद्विग्नाः प्रजास्तं स्वामिनं नान्वमोदन्त। अथापि पुरूरवसो यौवनं प्रतीक्षमाणाः कथंचन कालं यापयामासुः। तस्य चत्वारः पुत्रा अभूवन्। एकः स्त्रीत्वे बुधौरसः पुरूरवा ऐलेयः। स सर्वज्येष्ठः स प्रतिष्ठान पुरे राज्यासनमधितष्ठौ। अथान्ये त्रयः पुंस्त्वे स्वधर्मपत्न्यामुत्कलगयविनताश्वा अभूवन्।

तत्र

"उत्कलस्योत्कलं राष्ट्रं गयराष्ट्रं गयापुरी।
तथैव विनताश्वस्य राष्ट्रेऽभूत् पश्चिमे स्थितिः" ॥ १ ॥

गयापुरीति मगधस्योपलक्षणम्। पश्चिमं तु राष्ट्रमेतयोरेवोत्कलमगधयोः संलग्नः कश्चिदिलस्य पुरोपलक्षितः पश्चिमदेशः। पुराकाले यत्र दण्डकारण्यमासीत् तत्रैव राज्ञा सुद्युम्नेनेदं वनमुत्साद्य तत्र राष्ट्रं प्रकल्प्य स्वनामाङ्कितमिलस्य पुरं नाम नगरं निर्माय विनताश्वाय ज्येष्ठपुत्राय राजधानी प्रकल्पितेति केचिदुद्भावयन्ति। एतेऽपि देशाः सुद्युम्नाधिकारे प्रागासन्। त इदानीं पुत्रेषु विभज्य स्थापिता अभूवन्। परे त्वाहुः—अतिदूरे हि प्रतिष्ठानपुरादुत्तरप्रान्तस्थादिमे गयोत्कलादिदेशा राज्यान्तरान्तरिता विप्रकृष्टाः सन्तीति न ते देशाः सुद्युम्नाधिकारे संभाव्यन्ते। तस्मादारण्यप्रदेशा एवैतैस्त्रिभिर्भ्रातृभिर्वनान्युत्साद्य स्वेन स्वेन नाम्ना नगरं विनिर्माय प्रतिष्ठापितं स्यादिति संभाव्यते। उत्कलादिभिः सुद्युम्नपुत्रैरधिष्ठिता इमे देशा इत्यत एवैते उत्कलादिभिः शब्दैर्व्यपदिष्टा अभूवन्। अथ गन्धर्वदेशीयः प्रतिष्ठानप्रदेशस्तु पुरूरवसोऽधिकारे स्थापितं। तस्मिन् पुरूरवसि कालेन यौवनं प्राप्ते विशिष्टगुणयोगात् प्रतिष्ठितं तं प्रतिष्ठानपुरे राज्यासने प्रतिष्ठाप्य स सुद्युम्नस्तपसे वनमाससाद-इति प्रसिद्धिः। एतच्च महाभारतपाद्मपुराणाद्यनुसारेणाख्यातम्। तदिदं द्वितीयं मतमास्थेयम्॥ २ ॥

विष्णुपुराणे तु जन्मतः स्त्रीभूतायाः इलायाः पश्चात्पुंस्त्वप्राप्त्या सुद्युम्नत्वमाख्यायते। तथाहि मैत्रेयं प्रति भगवान् पराशरः प्राह—"इष्टिं च मित्रावरुणयोर्मनुः पुत्रकामश्चकार। तत्रापहृते होतुरपचारादिला नाम कन्या बभूव। सैव च मित्रावरुणप्रसादात् सुद्युम्नो नाम मनोः पुत्रो मैत्रेयासीत्। पुनश्चेश्वरकोपात् स्त्री सती सोमसूनोर्बुधस्याश्रमसमीपे बभ्राम। सानुरागश्च तस्यां बुधः पुरूरवसमात्मजमुत्पादयामास। सुद्युम्नस्तु स्त्रीपूर्वकत्वाद्राज्यभागं न लेभे। तत्पित्रातु वशिष्ठवचनात् प्रतिष्ठानं नाम नगरं सुद्युम्नाय दत्तम्। ततश्चासौ पुरूरवसे प्रादात्" इति॥ ब्राह्मपंचमे सेयमिला तेषामिक्ष्वाकुप्रभृतीनामुत्पत्तेः प्रागेव पुत्रकाम्येष्टिकाले होतुरपचारादुत्पन्नतया सर्वज्येष्ठासीत्। तथा चाह वायुः—

"अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः ।
अनुत्पन्नेषु नवसु पुत्रेष्वेतेषु सुव्रतः ॥ १ ॥

शक्रोऽप्याह—

तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ।
दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥
तेन हौत्रपचारेण कन्येला नाम साभवत् ॥ २ ॥

अथ मित्रावरुणप्रसादात् पुंस्त्वमुपलभ्य सा पुनः सुद्युम्नो नामाभूत्। तथा च सर्वज्येष्ठोऽप्यसौ सुद्युम्नः प्रथमं स्त्रीत्वेनोत्पन्नत्वाद् भोजनाच्छादनाद्युपभोगमात्राय प्रतिष्ठानपुरोपलक्षितं मण्डलिकाधिपत्यमेवाधिचक्रे । साम्राज्यस्यतु प्रधानासनमिक्ष्वाकुरेव जग्राहेति केचित् । वस्तुतस्तु सुद्युम्नोऽयमिलापरनामा सर्वज्येष्ठ आसीत् । प्रतिष्ठानपुरमेव तु प्रधानं साम्राज्यसिंहासनम् । तत्रैषोऽभिषिक्तः कनिष्ठानिक्ष्वाकुप्रभृतीन् मण्डलिकभूमिदानेनानुजग्राह । अतएव त्वाहुः—पश्चिमोत्तरप्रदेशादागत्य इक्ष्वाकुर्दायप्राप्तायां भूमाववधमण्डलं परिकल्प्य तत्रायोध्यां नाम राजधानीं विनिर्ममे ।] राज्याभिषेकस्तु प्रधानराज्यधान्यां प्रतिष्ठाने सुद्युम्नस्यैवाभून्न त्विक्ष्वाकोः । तदुक्तं पाद्मे प्रथमखण्डेऽष्टमेऽध्याये—

मनोर्वैवस्वतस्यासन् दशपुत्रा महाबलाः ।
इलस्तु प्रथमस्तेषां पुत्रेष्ट्या समकल्प्यत ॥ १ ॥
इक्ष्वाकुः कुशनाभश्चारिष्टो धृष्टः करूषकः ।
नरिष्यन्तश्च शर्य्यातिर्नाभगश्च पृषध्रकः ॥ २ ॥
अभिषिच्य मनुः पूर्वमिलं पुत्रं स धार्म्मिकम् ।
जगाम तपसे भूयः पुष्करं स तपोवनम् ॥ ३ ॥
ततोऽयोध्यां समागत्य समतिष्ठत् यथा पुरा ।
बुधस्य भवने तिष्ठन् इलो गर्भधरोऽभवत् ॥ ४ ॥
अजीजनत्पुत्रमेकमनेकगुणसंयुतम् ।
बुधं उत्पाद्य तं पुत्रं स स्वर्गमगमत्पुनः ॥ ५ ॥
सोमार्कवंशयोरादाविलोभून्मनुनन्दनः ।
एवं पुरूरवा इन्दोरभवद्वंशवर्द्धनः ॥ ६ ॥
इलस्य पुरुषत्वे तु सुद्युम्न इति चोच्यते ।
तस्य पुत्रत्रयमभूत् हरिताश्वगयोत्कलाः ॥ ७ ॥
उत्कलस्योत्कला नाम गयस्य तु गयापुरी ।
हरिताश्वस्य दिग्यास्या संज्ञाता कुरुभिः सह ॥ ८ ॥

अत्र मनोः [पुष्करात्प्रतिनिवृत्तस्य प्रागवदयोध्यायां गमनं प्रक्षिप्तपाठात् प्रामादिकं स्यात् । अयोध्यायां मनोरनवस्थानात् । अथैतस्य सुद्युम्नस्य स्त्रीत्वला-

भोत्तर प्रजायां विरक्तायां राज्यप्रबन्धे शिथिलतां गतेऽयमिक्ष्वाकुरेवायोध्याऽधिष्ठानः प्रधानतामाजगाम । इलव्यतिरिक्तेषु पुंभ्रातृष्विक्ष्वाकोरेव सर्वज्येष्ठत्वात् । एतदेवोक्तं पाद्मे—

"इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् इति । लैङ्गे पञ्चषष्टितमेऽप्येव-मुक्तम्—यथा

मनोस्तु प्रथमस्यासन् नवपुत्रास्तु तत्समाः ।
"इक्ष्वाकुर्नभगश्चैव धृष्णुः शर्यातिरेव च ॥ १ ॥
नरिष्यन्तश्च वै धीमान्नाभागोऽरिष्ट एव च ।
करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ॥ २ ॥
इला ज्येष्ठा वरिष्ठा च पुंस्त्वं प्राप च यां पुरा ।
सुद्युम्न इति विख्याता पुंस्त्वं प्राप्ता त्विला पुरा ॥ ३ ॥
मित्रावरुणयोस्त्वत्र ऽसादान्मुनिपुङ्गवाः ।
पुनः शरवणं प्राप्य स्त्रीत्वं प्राप्तो भवाज्ञया ॥ ४ ॥
इक्ष्वाकोरश्वमेधेन इला किंपुरुषोऽभवत् ।
इलाकिंपुरुषत्वे च सुद्युम्न इति चोच्यते ॥ ५ ॥
मासमेकं पुमान् वीरः स्त्रीत्वं मासमभूत् पुनः ।
सुद्युम्नो मानवः श्रीमान् सोमवंशप्रवृद्धये ॥ ६ ॥
इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ।
कन्याभावात्तु सुद्युम्नो नैव भागमवाप्तवान् ॥ ७ ॥
वशिष्ठवचनात्त्वासीत् प्रतिष्ठाने महाद्युतिः ।
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः ॥ ८ ॥
तत्पुरूरवसे प्रादात् राज्यं प्राप्य महायशाः ।
मानवेयो महाप्राज्ञः स्त्रीपुंसोर्लक्षणान्वितः ॥ ९ ॥ इति ।

अथ ब्राह्मे पुरूरवसः प्रसादादिलाया जीवनशेषे सर्वथा पुंस्त्वलाभः समर्थ्यते । तथा हि—

स मातरं दुःखयुक्तां समीक्ष्येलां पुरूरवाः ।
नमस्याथ विनीतात्मा प्रणयादिदमब्रवीत् ॥ १ ॥
मातः कुतः सशोका त्वं दुर्मना इव लक्ष्यसे ।
पुत्रोऽस्म्यहं ते कर्मण्यः कस्मात्ते मानसो ज्वरः ॥ २ ॥
इत्थं पुत्रवचः श्रुत्वा लज्जमानाऽपि सा तदा ।
इलोवाच निजं दुःखं शृणु पुत्र वदामि ते ॥ ३ ॥
अवाच्यमपि ते वच्मि पित्रोः पुत्रो यतो गतिः ।
दुःखसागरमग्नानां पुत्रः प्रवहणं परम् ॥ ४ ॥
पुमानहमिलो नाम स इत्थं स्त्रीत्वमाप्तवान् ।
पूर्ववत् पुंस्त्वमिच्छामि सोऽयं मे मानसो ज्वरः ॥ ५ ॥

स त्वं स्वपितरं पृच्छ बुधं गत्वा यथार्थवत् ।
उपायं पुंस्त्वलाभाय मन्ये स उपदेक्ष्यति ॥ ६ ॥
स मातृवचनादैलो गत्वा पितरमञ्जसा ।
तदर्थमर्थयामास मातुः कृत्यं तथात्मनः ॥ ७ ॥
उवाच स बुधस्तस्मै शिवगौरीप्रसादतः ।
पुंस्त्वमेष्यत्यसौ तस्मात्तावाराधय सर्वथा ॥ ८ ॥
पुरूरवाः पितुर्वाक्यं श्रुत्वा मातृहिते रतः ।
हिमवन्तं गिरिं गत्वा चक्रे गङ्गातटे तपः ॥ ९ ॥
प्रससाद शिवा तस्मै प्रत्यक्षं ददृशे तदा ।
प्रणम्य वरदां गौरीं स मातुः पुंस्त्वमार्थयत् ॥ १० ॥
शिवोवाच तदा तस्मै सेलाऽत्रैवाभिषिच्यताम् ।
अत्राभिषेकमात्रेण पुंस्त्वलाभो भविष्यति ॥ ११ ॥
यत्र नद्य इमास्तिस्रो गङ्गया सह संगताः ।
नृत्या गीता च सौभाग्या तत्र पुंस्त्वमगादिला ॥ १२ ॥
प्राप्य पुंस्त्वं स सुद्युम्नः परं हर्षमुपागतः ।
महाऽभ्युदयसिद्ध्यर्थमश्वमेधं चकार सः ॥ १३ ॥
चतुरङ्गं बलं राज्यं दण्डकेऽस्थापयत्तदा ।
इलस्य पुरनाम्ना तु विख्यातं तदिला पुरम् ॥ १४ ॥
विनताश्वं पुंस्त्वजातं तत्र राज्येऽभिषिच्य सः ।
प्रतिष्ठाने प्रतिष्ठाप्य तमैलं वनमाययौ ॥ १५ ॥ इति ॥

तथा च पूर्वमिला स्त्री, तत इलः पुरुषः, पुनरिला स्त्री, पुनः सुद्युम्नः पुरुषः भरतखण्डस्य दक्षिणापथे च तस्य राजधानी प्रतिष्ठानपुरमासीत्—तदिदं तृतीयं मतमाख्यातम् ॥ ३ ॥

अथास्मिन्निलाख्याने त्रिष्वप्येतेषु मतेषु विदुषां विप्रतिपत्तयः प्रदर्श्यन्ते । तत्र केचिदित्थं तावत् प्रत्यवतिष्ठन्ते । येयमिला नामैतेषां पौरवाणां वंशस्य मूलभूता बुधस्य पत्नी मनोर्दुहिता काचिदाख्यायते । सा तावन्न स्त्री काचिदासीत् । न च ततः कस्यचिद्वंशस्य प्रवृत्तिः संभवति । अप्राणित्वादिलायाः स्त्रीत्वेनाख्यानस्य रूपकत्वात् । तथाहि—मानव्या मैत्रावरुण्या अस्या इलायाः पौराणिकसर्वाख्यानमूलभूतायां श्रुतौ सा तावदिला कर्मविशेषतया तत्कर्मफलभूताशीर्विशेषतया वा निर्दिश्यते । तस्या एव च मनुदुहितृत्वमुपचर्य्यते । मित्रावरुणाभ्यामुपसङ्गमश्च । न च ततोऽन्या मानुषी काचिदिला पुराणेष्वभिप्रेयते ।:—

"अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः ।
मित्रावरुणयोरंशे मनुराहुतिमावपत् ॥

"दिव्यसंहनना तस्मादिला जज्ञे" इति श्रुतिः । इति ब्रह्मपुराणप्रतिज्ञानात्

श्रुत्युक्ताया एवेलाया एतेषु पुराणाख्यानेषु निर्धार्यमाणत्वात्। श्रुतौ तु सैला घृतपदी गौरुक्ता अथवा कर्मविशेषोऽभिप्रेयते। तदाशीर्विशेषो वा न तु स्त्री काचित्। तथाहि तैत्तिरीयश्रुतौ तावत्—"मनुः पृथिव्या यज्ञियमैच्छत्। स घृतं निषिक्तमविन्दत्"। सोऽब्रवीत्—कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति। तावब्रूतां मित्रावरुणौ-गौरेवावमीश्वरौ कर्तोः स्व इति। तौ ततो मां समैरयताम्। सा यत्र यत्र न्यक्रामत् घृतमपीड्यत तस्माद्घृतपद्युच्यते। तदस्यै जन्म मानवीत्याह—मनुर्ह्येतामग्रेऽपश्यत्। घृतपदीत्याह—यदेवास्यै पदाद् घृतमपीड्यत तस्मादेवमाह। मैत्रावरुणीत्याह-मित्रावरुणौ ह्येनां समैरयताम्"—(तै० सं० २।६।७)॥ इति श्रूयते। तत्रेयं गौः सूर्य्यकिरणः। मनुर्मित्रावरुणौ च देवताविशेषाः। तादर्थ्येनैव श्रुतेः सामञ्जस्येनोपपत्तेः। नत्विमे मनुष्याः। तादर्थ्ये श्रुत्यक्षरस्वारस्यलाभात्॥ तथा च घृतपदी गौरियमिलेति प्रतिपद्यामहे। अथवाऽस्तु कर्मविशेष एव। यथोक्तं शतपथश्रुतौ"—

"मनवे ह वै प्रातरवनेग्यमुदकमाजह्रुः—यथेदं पाणिभ्यामवनेजनायाहरन्ति-एवम्। तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे। सहास्मै वाचमुवाद—"विभृहि मा, पारयिष्यामित्वा"—इति। कस्मान्मा पारयिष्यसीति। औघ इमाः सर्वाः प्रजा निर्वोढा। अतस्त्वा पारयितास्मीति। कथं ते भृतिरिति। सहोवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवति। उत मत्स्य एव मत्स्यं गिलति। कुम्भ्यां माऽग्रे विभरासि। स यदा तामतिवर्द्धा अथ कर्षूं खात्वा तस्यां मा विभरासि। स यदा तामतिवर्द्धै अथ मा समुद्रमभ्यवहरासि। तर्हि वा अतिनाष्ट्रो भवितास्मीति। शश्वद्ध झष आस। स हि ज्येष्ठं वर्द्धते। अथेतिथीं समां तदौघ आगन्ता। तन्मा नावमुपकल्प्योपासासै। स औघ उत्थिते नावमापद्यासै—ततस्त्वा पारयितास्मीति। तमेवं भृत्वा समुद्रमभ्यवजहार। स यतिथीं तत्समां परिदिदेश ततिथीं समां नावमुपकल्प्योपासांचक्रे। स औघ उत्थिते नावमापेदे। तं स मत्स्य उपन्यापुप्लुवे। तस्य शृङ्गे नावः पाशं प्रतिमुमोच। तेनैतमुत्तरं गिरिमतिदुद्राव। सहोवाच। अपीपरं वै त्वा। वृक्षे नावं प्रतिबध्नीष्व। तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीत्। यावद्यावदुदकं समवायात् तावत्तावदन्ववसर्पासीति। स ह तावत्तावदेवान्ववससर्प। तदप्येतदुत्तरस्य गिरेर्मनोरवसर्प्पणमिति। औघो ह ताः सर्वाः प्रजा निरुवाह। अथेह मनुरेवैकः परिशिशिषे। सोऽर्चन् श्राम्यंश्चचार प्रजाकामः। तत्रापि पाकयज्ञेनेजे। स घृतं दधिमस्त्वामिक्षामित्यप्सु जुहवाञ्चकार। ततः संवत्सरे योषित् संबभूव। सा ह पिब्दमानेवोदेयाय। तस्यै ह स्म घृतं पदे सन्तिष्ठाते। तया मित्रावरुणौ संजग्माते। तां होचतुः—कासीति। मनोर्दुहितेति। आवयो ब्रूष्वेति। नेति होवाच। य एव मामजीजनत तस्यैवाहमस्मीति। तस्यामपित्वमीषाते। तद्वा जज्ञौ तद्वा न जज्ञावतित्वेवेयाय। सा मनुमाजगाम। तां ह मनुरुवाच कासीति। तव दुहितेति। कथं भगवति मम दुहितेति। या अमूरप्स्वाहुतीरहौषीः-घृतं दधिमस्त्वामिक्षां—ततो मामजीजनथाः। साशीरस्मि। तां मा यज्ञेऽवकल्पय। यज्ञे चेन्मावकल्पयिष्यसि—बहुः प्रजया पशुभिर्भविष्यसि। यामु मया काञ्चा-

शिषमाशास्विष्यसे सा ते सर्वा समर्धिष्यते इति । तामेतन्मध्ये यज्ञस्यावाऽकल्पयन् । मध्यं ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् । तयाऽर्चन् श्राम्यंश्चचार प्रजाकामः। तयेमां प्रजातिं प्रजज्ञे । येयं मनोः प्रजातिः यामस्वेनया काञ्चाशिषमाशास्त सास्मै सर्वा समार्ध्यत । सैषा निदानेन यदिडा स यो हैवं विद्वानिडया चरति—एतां हैव प्रजातिं प्रजायते यां मनुः प्राजायत । यामस्वेनया काञ्चाशिषमाशास्ते सास्मै सर्वा समृध्यते"—इति ॥ तदनेनेडाब्राह्मणेन तस्या इडायास्त्रैभाव्यमुपपद्यते—अस्ति वा तावदप्सु दधिघृतमस्त्वामिक्षाहवनात्मिकायाः पाकयज्ञविशेषरूपायाः क्रियाया इडाशब्देन व्यवहारः तामेतन्मध्ये यज्ञस्याऽवाकल्पयन् यदन्तरा प्रयाजानुयाजानिति श्रुत्याऽनुयासात् प्राक् तस्या एव क्रियमाणत्वात् । तयैव चाशिषामाशासनात् । अपि वा दीर्घजीवनप्रजापशुरूपाशीरिहेडाशब्देन व्यपदिश्यते । साशीरस्मि—इति श्रुत्या स्पष्टमाशिषि तच्छब्दस्य विहितत्वात् । अपिवा हुतशेषद्रव्यं पञ्चावत्तमाशीर्लाभार्थं यजमानब्रह्माऽध्वर्युहोत्रग्नीध्रभक्षणीयमिडानाम । "अथेडां पशून् समवद्यति सा पञ्चावत्ता भवती" त्यादिश्रुति वचनादवदानयोग्यस्यैवार्थस्यैडाशब्देन व्यपदेश्यत्वात् । अथवा—एक एडापदार्थः कर्मैव । तस्यैव पञ्चावत्तहुतशेषहविर्द्रव्यभक्षणद्वारा दीर्घायुष्ट्वप्रजापशुरूपाशीर्लाभे निमित्तभूतत्वात् । तत्स्वरूपारम्भकत्वादेव तु हविर्द्रव्येऽपि तच्छब्द उपचर्य्यते—इति युक्तम् । यत्तु मानुषी काचिदिडा नामासीदित्यभिप्रेयते तद्भ्रान्तम् ।

मानुषजन्मवैरूप्यात्[1], अयोनिजत्वात्[2], जनकस्य तदज्ञानात्[3], अजनकस्यापि तज्जन्मन्यपत्यत्वलाभात्[4], कर्मविशेषे तदुपसंहाराच्च[5] । तथाहि मानुषीणां तावच्छोणिते शुक्रहवनादुत्पत्तिर्दृश्यते, । इडायास्त्वप्सु दध्यादिहवनादुत्पत्तिराख्यायते इति जन्मन्यास्ते वैरूप्यम् । नाप्सु दध्यादिहवनात्कस्याश्चिन्मानुष्याः क्वचिदप्युत्पत्तिर्दृष्टा श्रुता वा । तस्मान्नेयमिडा मानुषी संभाव्यते ॥ १ ॥ अपि च मातापितृभ्यां मानुषी जायते । नत्वयोनिजा काचिन्मानुषी दृष्टा । इयं त्विडा मातरमन्तरेणैवायोनिजा निर्दिश्यते । यत्तु श्रद्धा नामेडाया मातासीदित्यैतिहासिका आहुस्तदपि भ्रान्तम् । यज्ञक्रियायाः श्रद्धयैवोत्पाद्यमानतया मानसभावविशेषरूपायां तस्यां मातृत्वोपचारेऽपि श्रद्धानाम्न्याः कस्याश्चिन्नार्य्याः सत्वे प्रमाणविशेषानुपलम्भात् । ननु श्रद्धा वै सूर्यस्य दुहिता । श्रद्धयैष सोमो भवतीति शतपथश्रुतौ ( कां० ब्रा० ब्रा० १२ । ३ । ४ ) विवस्वतो दुहिता श्रद्धा श्रूयते इति चेन्न । तस्या वैवस्वतमनुभगिनीत्वश्रवणान्मनुपत्नीत्वासंभवात् । ननु स्वायंभुवमनुपत्नीत्वं संभाव्यते इति चेन्न । सोमजनन्यास्तस्याः श्रद्धायाः दुहितरीडायां सोमभगिन्यां सोमसुतेन बुधेन पुत्रोत्पादनायोगात् । तस्मान्नैषा सूर्यदुहिता श्रद्धा प्रकृते मनोः पत्नी संभावयितुं शक्यते । न चान्या काचिच्छ्रद्धा मानुषी श्रूयते । तस्मान्मानुषे जन्मवैरूप्यादयोनिजत्वाच्च नेयमिडा मानुषी भवितुमर्हति ॥ २ ॥ मानुषीं दुहितरं जनयन्तौ मातापितरौ ध्रुवं तामागर्भाधानादभिजानाते—इयमावाभ्यां जनितेति । इह त्वजानन्तं पितरं सेडा प्राह तवाहमस्मि दुहितेति । तस्मादिह दुहितृत्वपितृत्वे काल्पनिके इति गम्यते । मनुना घृतादिहवनात् संवत्सरोर्ध्वं

जातायामाशिषि दुहितृत्वोपचारस्य संभाव्यमानत्वात् । तस्मान्नेयमिडा मानुषी भवितुमर्हति ॥ ३ ॥ अपि च मानुषी तावदेकाभ्यामेव मातापितृभ्यां जायते । न तु द्वाभ्यां पितृभ्यां त्रिभ्यो वा पितृभ्यः । इह तु मानवीयमिडा मैत्रावरुणी श्रूयते । मनुना जनितायां तस्यां मित्रावरुणावपि स्वमपत्यत्वमीषाते । सा मानुषी सती कथं त्रिभ्यः पितृभ्यो जायते । तस्मान्नेयमिडा मानुषी भवितुमर्हति ॥ ४ ॥ अपि च साशीरस्मि । तां मा यज्ञेऽवकल्पयेत्युक्त्या प्रयाजानुयाजयोर्मध्यतः प्रधानयागोत्तरेतिकर्तव्यतयाऽनुविहिते भोग्यश्रीलाभप्रयोजके कर्मविशेषे तदुपसंहारः क्रियते । तेनास्या ऐतिहासिक्याः प्रस्तावस्य इडाया अस्मिन्नेव कर्मविशेषे तात्पर्य्यमस्तीति ध्रुवं गम्यते । तेनेयमिडा मानुषी काचिदासीन्नारीत्यैतिहासिकानामर्वाचां भ्रान्तिरेव । तथा च तस्यामिडायां पुरूरवा जज्ञे ततो वा पौरवो वंशः प्रवृत्त इत्यादिकं सर्वं निरर्गलं निर्मूलमनास्थेयं चेति प्राप्नोति ।

अत्र ब्रूमः । अस्तु तावद् घृतपद्या गौरितिवा संज्ञा । अस्तु वा पाकयज्ञियस्य कर्मविशेषस्यैडा संज्ञा । अस्तु वा तदाशीर्विशेषस्य हुतशेषद्रव्यस्य वेडा सञ्ज्ञा । अथापि तावता मानुष्याः सा संज्ञा नास्तीति न भ्रमितव्यम् । अवश्यं हीयमिडा नाम स्त्री काचिदासीत् । ततः संवत्सरे योषित् संबभूवेति श्रुत्या स्पष्टं तथा प्रतिपत्तेः तथा मित्रावरुणौ संजग्माते—इति श्रुत्युक्तस्य मित्रावरुणाभ्यामुपसङ्गमस्य वान्यथानुपपत्तेः । अपिच । औघनिर्वहनादूर्ध्वमिह मनुरेवैकः परिशिशिषे स प्रजाकामः पाकयज्ञेनेजे । ततः संवत्सरे योषित्, संबभूवेति श्रावयन्ती श्रुतिरस्याः पाकयज्ञात्मिकाया इडाया; प्रजाकामेन कर्तव्यतां तस्याः प्रजोत्पत्तिप्रयोजकतां च स्पष्टमाचष्टे । तत्र यद्यस्या इडायाः स्त्रीरूपत्वं न स्यात् तर्हि प्रजाकामेन कृतायास्तस्याः कर्मविशेषरूपया प्रजोत्पत्तिफलानुत्पत्तौ कर्मणः प्रजार्थत्वस्तावकस्यैतस्येडाब्राह्मणस्य मत्तप्रलपितत्वमापद्यते ।" स यो हैव विद्वानिडया चरति, एतां हैव प्रजातिं प्रजायते । यां मनुः प्रजायतेत्यादि श्रुत्या तदिडाकर्म कर्तुर्मनोरिव प्रजोत्पत्तिः सुस्पष्टं प्रतिपद्यते । यदि तावदिडाकर्मणः फलरूपा सा नारीडा मनोरेव नेष्येत स तर्हि कोऽन्यः प्रजाकामस्तदिडाकर्म कर्तुं प्रवर्तेत । ये त्विडा ब्राह्मणश्रुत्याः प्ररोचनार्थतां मन्यमानाः केवलमर्थवादतामाचक्षाणा मनुकर्तृकयज्ञाद्यर्थजातं सर्वमेवापलपन्ते ते साहसिका वैतण्डिकाश्चेति निरस्यन्ते । संभवत्यामर्थप्रतिपत्तौ तदुपपत्तौ च सत्यामनिमित्तं तदपलापस्य बाल्यचापल्यमात्रत्वात् । अर्थस्य तत्कर्मोपपादकस्य वस्तु भूतस्यैवाख्यानमर्थवाद इत्युच्यते । न तु मिथ्याप्रशंसनं मिथ्यानिन्दनं वा क्वचिदर्थवादः संभवति । तस्मादवश्यं मनुकृतायाः पाकयज्ञियेडायाः फलभूता मानवी दुहिता काचिदिडा नामासीत् । तस्याश्च नार्या इडाप्रभावेणोत्पत्तेरिडा संज्ञा कृतासीत् इति तत्वम् ।

अतएव चैतस्या इलाया यज्ञसंस्कारकर्तृत्वं तैत्तिरीयब्राह्मणश्रुतौ श्रूयते "इडा वै मानवी यज्ञान् काशिन्यासीत् । साश्रृणोत्–असुरा अग्निमादधत इति । तद-

गच्छत्। त आहवनीयमत्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्य्यपचनम्। साऽब्रवीत्—प्रतीच्येषां श्रीरगात्। भद्रा भूत्वा परा भविष्यन्तीति। यस्यैवमग्निराधीयते। प्रतीच्यस्य श्रीरेति। भद्रो भूत्वा पराभवति॥ १॥ साऽशृणोत्—देवा अग्निमादधत इति। तदगच्छत्। तेन्वेहार्य्यपचनमग्न आदधत। अथ गार्हपत्यम्। अथाहवनीयम्। साऽब्रवीत् प्राच्येषां श्रीरगात्। भद्रा भूत्वा स्वर्गलोकमेष्यन्ति प्रजां तु न वेत्स्यत इति॥ यस्यैवमग्निराधीयते-प्राच्यस्य श्रीरेति। भद्रो भूत्वा स्वर्गं लोकमेति। प्रजा तु न विन्दते॥२॥ साऽब्रवीदिडा मनुम् तथा वा अहं तवाग्निमाधास्यामि यथा प्र प्रजया पशुभिर्मिथुनैर्जनिष्यसे, प्रत्यस्मिन् लोके स्थास्यसि। अभिस्वर्गंलोकं जेष्यसीति । गार्हपत्यमथ आदधात्। गार्हपत्यं वा अनुप्रजाः पशवः प्रजायन्ते। गार्हपत्येनैवास्मै प्रजां पशून् प्राजनयत् अथा न्वाहार्यपचनम् । तिर्य्यङ्ङिव वा अयं लोकः। अस्मिन्नेव तेन लोके प्रत्यतिष्ठत्। अथाहवनीयम्। तेनैव स्वर्गं लोकमभ्यजयत् । यस्यैवमग्निराधीयते । प्रप्रजया पशुभिर्मिथुनैर्जायते । प्रत्यस्मिन् लोके तिष्ठति। अभिस्वर्गं लोकं जयति—" इति। (तै० ब्रा० १।१।४) असुरास्तावदाहवनीयपूर्वकमग्नित्रयाधानं कुर्वन्तिस्म । देवाऽस्तु दक्षिणाग्निपूर्वकम्। तदुभयं प्रत्याख्याय सेला गार्हपत्यपूर्वकं व्यवस्थापयति स्म । तदित्थं यज्ञप्रकरणसंस्कारकत्वं मानुष्या इडाया विग्रहवत्वमन्तरेण न सभाव्यते। तस्मादस्तीयं मनुकन्या काचिदिडा नाम्नी स्त्रीति सिद्धम्।

यत्तु मानुषजन्मवैरूप्यादिडा नारी नासीदित्याहुस्तद् भ्रान्तम् । न तावदप्सु हुतमाज्यादिद्रव्यचतुष्टयमेवाद्धा नारीडायाः शरीरात्मकद्रव्यं तत्रेष्यते । अपितु :—

"प्रसुव आपो महिमान मुत्तमं कारुर्वो चाति सदने विवस्वतः" ( ऋ० सं० १०। ७५। १ ) इति श्रुतेर्वैवस्वतपितुर्विवस्वतो गृहेऽग्निहवनात्मकयज्ञापेक्षयाऽप्सु हवनात्मकयज्ञस्यैवाधिकप्रचारदर्शनाद्वैवस्वतेनाप्यनेन श्राद्धदेवेनाप्स्वेव दध्यादिद्रव्याण्याजुहवां चकार"।

ताद्दशाहुत्युत्तरं तद्धुतशेषं भुञ्जानायाः श्रद्धाख्याया मनुपत्न्या एवोदरे तस्या दुहितुरुत्पत्तेरिष्यमाणत्वात् । अन्यथा—'स यो हैवं विद्वानिडया चरति एतां हैव प्रजातिं प्रजायते यां मनुः प्राजायतेति श्रुतेरद्यापि यजमानानां मनुवदप्स्वेव प्रजोत्पत्तिरुक्ता संभाव्येत। न च तथा दृश्यते । वैषम्ये तूच्यमानं मनुसादृश्यं व्याकुप्येत। तस्मात् साम्योपपादनार्थं मनोरपिहुतशेषभक्षणफलरूपेणैव प्रजोत्पत्तिस्तदात्वेऽपि संभाव्यते। अत एवैतिहासिकास्तच्छ्रुत्यास्तथैव तात्पर्य्यं परिपश्यन्ते। मनुपत्न्यां श्रद्धायामेवास्या इडाया उत्पत्तिमाचक्षते । "मित्रावरुणयोरिष्टिं प्रजार्थमकरोत् मनुः। तत्र श्रद्धा मनोः पत्नी हतोरं समयाचत ॥ १॥

दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ ॥ तेन होत्रपचारेण कन्येला नाम साभवत्" ॥ २ ॥ इति ॥ ( भा० ६—१ )

एतेनेडाहुतशेषभक्षणफलरूपत्वेऽपि मनोरौरसान्मनुपत्न्याः श्रद्धाख्यायां गर्भे दुहितुरिडाया उत्पत्तेर्योनिजैवेयमिडा प्रतिपद्यते न त्वयोनिजा। तस्मान्नास्ति तस्या मानुषजन्मवैरूप्यमयोनिजत्वं वेति सिद्धम् ॥ २ ॥

अथ यदप्युक्तं जनकस्य तदुत्पत्त्यज्ञानान्नेयमिडा मानुषीति, एतदपि भ्रान्तम्। संभाव्यते हि मित्रावरुणाभ्यामस्य मनोः कश्चन सम्बन्धः। तेन कुतश्चिद्धेतोरस्य मनोरनुपस्थितौ मित्रावरुणगृहे श्रद्धायां गृहीतजन्मनस्तत्रैव चिरं स्वदुहितृवत् परिपालितायास्तस्या इडायाः पश्चान्मनुगृहे समागतायाः संभवति मनुना तादृशः समालापः। अथवा मनुना स्वदुहितृतया विज्ञाताया अपीडाया इडाकर्मप्रभावजनितत्वमावेदयितुमित्थं समालापः प्रादर्श्यत। नैतावता जनयितुर्मनोः स्वसन्तानानभिज्ञत्वं कल्पयितुं युज्यते। तस्मान्नास्ति जनकस्य तदज्ञानमिति सिद्धम्। अथवा मनोरस्यायं पूर्वं स्त्रीपुंलक्षणाक्रान्तः सुद्युम्नः पुत्र एवासीत् परिचितः। स पश्चात् स्त्री बभूवेति स्त्रीभावादूर्ध्वं स्वं पितरमागत्य "तवाहं दुहितास्मी" ति वदन्तीमिलां प्रत्यस्य मनोर्युक्त एवायं प्रश्नः-कथं मम दुहितासीति तदनेन श्रौतेन प्रश्नाक्षरस्वारस्येनैवास्या इलायाः सुद्युम्नाख्यपुंरूपा पूर्वावस्था श्रुत्यभिप्रेता प्रतीयते—इति बोध्यम् ॥ एतेन जनकस्य स्वदुहित्रज्ञानं स्थानप्राप्तं संभाव्यते इति युक्तं पश्यामः। अथ यदुक्तमजनकस्यापि तज्जन्मन्यपत्यत्वलाभ इति तदपि चिन्त्यम्। मानव्या अपीडाया मित्रावरुणाभ्यां दुहितृत्वेन भावितत्वान्मैत्रावरुणीत्वोपपत्तेः। भवति ह्यन्यजाताया अप्यन्यदुहितृत्वोपचारो यथा दशरथकन्यायाः शान्तायाः लोमपादकन्यात्वं यथा वा शूरयादवकन्यायाः पृथायाः कुन्तिभोजकन्यात्वम्। एवमस्या मनुदुहितुरिलाया मित्रावरुणदुहितृत्वं न विरुध्यते तस्मादविसंवादः ॥ ४ ॥

अथ चान्यदुक्तमिडाख्यानप्रकरणस्य कर्मविशेषोपसंहार इति। तदपि निःसारम्। साशीरस्मीत्यभिदधत्या मनुदुहित्रा स्वस्येडायज्ञफलरूपत्वेनाभिधानात् तावता नारीरूपायास्तस्या अपलपितुमशक्यत्वात्। अथवा यामयं मनुः पाकयज्ञियामिडामकरोत् सैव परिणताहमित्थंरूपा समभूवमित्यभिप्रायेण कर्मफलरूपत्वमात्मनः पश्यन्ती सा तां मा यज्ञेऽवकल्पयेत्याद्यक्षरेण तया पाकयज्ञियेडया तादात्म्यं स्वस्योपनिबध्नाति। इडायज्ञप्रभावादुत्पन्नाहमिडानामास्मीति वक्तुं तादात्म्येनाह। अहमिया मिजयज्ञेडैवास्मीति। तथा चेत्थं तादात्म्योपचारेण नात्यन्तमस्या नारीडाया अपलापो युज्यते कर्तुम्। तस्मान्न कर्मविशेषे प्रकरणोपसंहार इति सिद्धम् ॥ ५ ॥

इदमत्रापरं द्रष्टव्यम्। पुरायुगे ह्येतदासीत्। ब्रह्मा वा, मनुर्वा, देवेन्द्रो वा, असुरेन्द्रो वा, महर्षिर्वाऽयः कश्चिद्देवोग्रप्रभावो महात्मा परितुष्टो भूत्वा यं कंचिदनुजिघृक्षति, यस्य वा चिररात्रायानुवर्तमानं परमयश आकाङ्क्षते तस्य सूर्यरश्मिस्थेन केनचिद्देवानीकेन दिव्येन वा केनचित्तारामण्डलेन, कयाचिद्वा नद्या, केनचिद्वा पर्वतेन, केनचिद्वा कर्म्मजनितेन विशिष्टेनार्थेन, केनचिद्वा कर्मणा नामसाम्यं कारयति तस्यैव नाम्ना तानुपयोजयति। तेषां वा नाम्ना कचित्तमुपयो-

जयति। सर्वथापि स्थिरतमेनाक्षयेण केनचिदर्थेन तादात्म्यप्रसिद्धिं लोके गमयित्वा तन्नामाक्षयं स्थिरतमं कारयति। तदिदमक्षयप्रतिप्रदानरूपं कर्म वेदे महद्गमयतीत्यनेन शब्देनोच्यते। यथा सुप्रसन्नो राजा कस्मैचित् पारितोषिकं रथशस्त्रवस्त्रादिकं काले ददाति यथा वा कस्मैचिदर्धासनं ददाति तद्वद्देवेदमपरं महद्गमयति यस्मै निरतिशयं प्रसन्नो भूत्वा प्रसादरूपेण परमेण यशस्यभियोजयितुमिच्छति। यथा देवेन्द्रः पुरोपरिचराय वसवे विमानं, ययातये रथं पार्थायार्जुनाय गाण्डीवं पारितोषिकरूपेण प्रददौ। यथा वा पुरूरवसे तत्पुत्राय चायवे तत्पुत्राय नहुषाय चार्द्धासनं सम्मानरूपेण प्रददौ। एवं ब्रह्मा सर्वेभ्यः पञ्चकृष्टिभ्यस्तत्कालिकवैराज्यस्वाराज्यशासनाधीनेभ्यः सूर्यरश्मिस्थदेवनामानीन्द्राग्निवरुणवायुरुद्रादीनि दत्वा नामसाम्येन यथायथं तादात्म्यं कल्पयित्वा तानमरपदवीदानेन सभाजयामास। एवं पुरूरवसा राज्ञा इष्टस्य पार्वणवैश्वदेव्यस्य पुरूरवसा नाम्ना संयोजनादद्यत्वेऽपि पर्वणि पर्वणि पुरूरवोमाद्रवस्यै विश्वेदेवा इज्यन्ते। पुरूरवसः पर्वणि संनिधानमद्यापि प्रतिपद्यन्ते। एवं पुरूरवसैवादौ प्रकल्पितयोरग्निमन्थनारण्योरुर्वशीपुरूरवो नाम प्रदानात्तदुत्पाद्याग्निकारणरूपस्याज्यभागस्य शुक्रत्वेन प्रकल्पितस्य चायुनाम्ना संयोजनमक्रियत। अथ हरिश्चन्द्रपितुः सत्यव्रतस्य त्रिशङ्कुनाम्ना प्रसिद्धस्य नाम्ना तारामण्डलं प्रख्याप्य तद्यशःस्थापनमक्रियत। अद्यत्वेऽपि राजा त्रिशङ्कुर्विश्वामित्रप्रभावाद्दिवमारूढो लम्बते इति हि लोकाः प्रतिपद्यन्ते। विश्वामित्रस्य भगिन्याः सत्यवत्याः कौशिकीत्याख्यासुप्रसिद्धाया नाम्ना काचिन्नदी तादात्म्येनेदानीं प्रथते। शिवश्वशुरस्य पार्वतीपितुर्हिमालयपर्वताधिराजस्य हिमालयसंज्ञा। तत्कन्यायाश्च गङ्गाया नाम्ना गङ्गानदी प्रथते। एवमेव चेह प्रकृते मनुनैव सर्वादौ प्रकल्पितस्वरूपायाः पाकयज्ञियाया इडायाः फलरूपेणोत्पन्नां दुहितरमिडानाम्नैव योजयित्वा तस्याः सम्मानाय यशसे च तादात्म्यं प्रकल्पयामास। ततस्तस्या दुहितुरिडायाः प्रार्थनया प्रजोत्पत्तिफलायाः पाकयज्ञियेडायाः प्रयाजानुयाजयोर्मध्ये स्थानं दत्वा व्रतयागोत्तरं कर्तव्यतया नियम्य तन्नामसाम्येन तादात्म्यद्वारा च दुहितुरिडाया अपि शश्वद्विख्यातिं प्रोत्पश्यतीति। तथा चैवं यशोऽर्थं प्रकल्पितैतादृशतादात्म्यमहिम्ना नामसाम्येन चान्यथा सन्तमर्थमन्यथा प्रतिपद्यमाना भ्रान्ता एवेति सुनिपुणमवधेयम्। तेन प्रकृतेऽपीडाशब्देन कर्मविशेषादीनां कतिपयार्थानां ग्रहणे संभवत्यप्यस्ति खलु श्राद्धदेवस्य वैवस्वतस्य मनोः कन्या काचिदिडानामेति सिद्धम्॥

अथान्ये पुनरन्यथा प्रत्यवतिष्ठन्ते। नेयमिडा नाम स्त्री काचिदासीत्। न च तस्याः पुरूरवा नाम कश्चिद्राजा जज्ञे। मनुश्चनेडा पुरूरवः प्रभृतीनां वैज्ञानिकपदार्थविशेषतया तदाख्यातस्य कल्पितरूपत्वात्॥ तथाहि—

"प्रशासितारं सर्वेषामणीयांसमणोरपि।
रुक्माभं स्वप्नधीगम्यं तं विद्यात्पुरुषं परम्॥ १॥
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥ २॥

इत्येवं मनुस्मृतौ सर्वशरीरान्तर्वर्तिनः शरीराधिष्ठातुः शारीरिकप्रपञ्चमूलस्तम्भरूपस्य कस्यचिच्छारीरकस्यात्मनाम्ना प्रसिद्धस्यार्थस्य मनुसंज्ञाभिधीयते ॥ स प्रजापतिः । तस्यैताः प्रजा इष्यन्ते वा एता अस्मच्छरीरे रसासृङ्मांसमेदोऽस्थिमज्जशुक्रेन्द्रियप्राणप्रज्ञादिव्यक्तयोऽन्तर्निविशन्ते । आत्मत एषामुत्पत्तेस्तेष्वात्मनोऽधिष्ठातृत्वाच्च । ता एताः प्रजा अस्य मनोः पाकयज्ञादुत्पद्यन्ते यदयमप्सु दध्यादिचतुष्टयं जुहोति स इडायज्ञः प्रकृते प्रजोत्पादकः पाकयज्ञः । श्रद्धा वा आपः इति श्रुतेः सर्वं जगदुपादानभूताः सूक्ष्माः काश्चिदापः श्रद्धाशब्देनोच्यन्ते । सा हि श्रद्धा द्युलोके हूयते ततः सोमः संभवति । सोमः पर्जन्ये हूयते ततो वर्षं संभवति । वर्षं पृथिव्यां हूयते ततोऽन्नं संभवति । अन्नं पुरुषे हूयते ततो रेतः संभवति । तदित्थं पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्रुतेः छान्दोग्यश्रुतिसिद्धोऽयमपामुत्क्रम एव स इतिहासप्रसिद्धोऽपामोघः । अपो ह यद्बृहती विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ॥

( ऋक्सं० १० । १२१ । ७ )-( यजुःसं० २७ । १८ )-( अथ सं० ४ । २ । ६ )

इति श्रुतिसिद्धो जलगर्भस्थोऽग्निरेव स मत्स्यो मनोः पारयिता । अपि च । आपोमयः प्राण इति श्रुतेः शरीरेऽप्यस्मिन्नेताः प्राणरूपा आपः श्रद्धाशब्देनेष्यन्ते । सा हि श्रद्धा मनोः पत्नी । प्राणगर्भे निहितेनात्मनः स्वरसेनैवासां शारीरप्रजानामुत्पत्तेः । तत्राप्सु खल्वयमात्मा मनुरिडां जुहोति । यदयमाज्यं दधिमस्त्वामिक्षा जुहोति । तत्र मस्तुशब्देन मधु विवक्ष्यते दधिमण्डस्य दध्ना कृतार्थत्वात् । आमिक्षापदेन चामृतम् । तथा च दधिमधुघृतामृतसमुच्चितरूपस्यान्नत्वात् तस्यैडात्वम् । यथौदने गोधूमे वा यावानयं घनभागस्तद्दधि भवति । रसयेन पूर्वोत्पन्नस्य क्षीरस्यैव घनीभावेन तदुत्पत्तेः यावान् वात्र स्नेहभागस्तद्घृतम् । यदत्र माधुर्यं स्वाद्यते स मधुभागः । अथ यावानत्र सौम्यो भागस्तदमृतम् । अन्नमयं हि सौम्य मन इति श्रुतिसिद्धायां मनस उत्पत्तौ तस्यैवोपादानत्वात् । दुग्धेऽप्येतच्चतुष्टयं भवति । यत्रैतन्न चतुष्टयं भवति न तदद्यते न तदन्नम् । तस्मादन्नमिडा । तदिदमप्सु प्राणे हूयते । स प्राणाहुतियज्ञ एवेडायज्ञः पाकयज्ञः । तस्माद्यज्ञात् संवत्सरे योषिदिडा संबभूव । अन्नेडानाम्ना तिस्र आशिषो विवक्ष्यन्ते—आयुश्च शुक्रं च श्रीश्चेति ॥

"एषा वाऽऽशीः—जीवेयं, प्रजा मे स्यात्, श्रियं गच्छेयम्"—इतीडा ब्राह्मणश्रुतेः ( शत १ । ८ । १ । ३६ ) दीर्घायुष्यायूंषि प्राणबलादुत्पद्यन्ते—सैकाशीः । बह्वयः प्रजाः शुक्रबलादुत्पद्यन्ते—सैकाशीः । बह्व्यः श्रियोऽध्यात्मं चाधिभूतं च पशुबलादुत्पद्यन्ते—सैकाशीः ॥

अन्नभोजनादेवैतत्त्रयमुत्पद्यते नान्यथा तस्मादेषा त्रिविधाशीरिहेडाशब्देनाख्यायते । "सैषा निदानेन यदिडा"–इति श्रुतेः । तस्यामाशिषीडायां बुधो गर्भं धत्ते । बुधोऽयं सोमरसादुत्पन्नो मानसो बोधः तस्माद्यश उत्पद्यते पुरूरवा नाम । आयुष्मतः प्रजावतः श्रीमतश्चैतस्मिन् दीर्घजीवने विज्ञानयोगादेवं यशः समुत्पद्यते । उर्व-

शीशब्देन दिश उच्यन्ते निदानेन। "अप्सरसौ दिगुपदिग्रूपे"—इति चयनश्रुतेः। दिक्षु यशसोऽभिव्याप्तिरेवोर्वश्या पुरूरवसो योगः। तस्मादायुरुत्पद्यते येनायं मानुषेणात्मना मृतोऽपि सन्नाकल्पं चिराय जीवन्भवति। तदिदमिलोपाख्यानस्याध्यात्मपक्षे तात्पर्य्यं नेयम्॥

अथाधिदैवतपक्षेऽपि तत्तात्पर्यमुपनीयते। मनुरयमाधिदैवतं हिरण्यगर्भमित्युच्यते। ब्रह्माण्डे सर्वेषामर्थजातानां तत एवोत्पत्तेस्तस्यैव सर्वाधिष्ठातृत्वात्। "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम"—इति श्रुतेश्च। स हि सर्वेषां प्रशास्ता। अणोरप्यणीयान् सर्वजगद्व्यापी च। स हि सर्वेषामात्मा। अथ सर्वं चेदमापोमयं जगत्। द्यः खलु तावदसौ दिवि दृश्यमानश्चन्द्रः स्वरश्मिभिः सर्वमिदमाकाशमभिव्याप्नोति। "त्वमिमा ओषधीः सोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः—त्वमात्मनोरूर्वान्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ"—इति मन्त्रश्रुतेः। तस्यैते कतिपयरश्मयः सूर्य्यद्राविताः सौम्या आपः सम्पद्यन्ते। ताः प्रतिमूर्च्छिताः स्विन्ना अनायतना भूत्वा व्योम्नि सर्वतोऽभिव्याप्नुवन्ति शरीरे प्रस्वेदवद्वायौ संसृष्टा भवन्ति। ता आपः श्रद्धाशब्देनोच्यन्ते। ता एवाभिवर्षन्त्यः पृथिव्यां सोमलताप्रभृतीन् सर्वानेव सोमप्रचुरान् पदार्थान् जनयन्ति। एतदभिप्रायेणैव तस्याः श्रद्धायाः सूर्यदुहितृत्वं सोमोत्पादकत्वं च वेदे श्रूयते—तथा हि—"पुनाति ते परिस्तुतं सोमं सूर्य्यस्य दुहिता वारेण शश्वतातना:—इति मन्त्रव्याख्यायां शतपथश्रुतौ (१२ कां ३ प्र० ४ ब्रा०) श्रद्धा वै सूर्यस्य दुहिता श्रद्धैव सोमो भवति" इत्याह। अत्र सोमशब्दः सोमौषधिपरः। परिस्तुतवारशब्दाभ्यां तथा प्रतिपत्तेः। उपलक्षणमेतत्। अन्येऽपि वाय्वादिगता रसात्मकाः सोमास्ततः श्रद्धात एवोत्पद्यन्ते। पञ्चाहुतिश्रुतौ श्रद्धा द्युलोके हूयते ततः सोमः संभवति—इत्यादिना तथोक्तत्वात्॥ तासु च सर्वब्रह्माण्डव्यापिनीष्वप्सु श्रद्धाशब्देनोपात्तासु स्ववीर्य्याधानादयं हिरण्यगर्भो मनुः सर्वा एताः प्रजा जनयति। तथा चासामपां सर्वप्राथमिकं तावद्—"आपो ह वा इदमग्रे (शतप० ११।१।६।१।) इति शतपथादि श्रुतिवचनादवगम्यते। सृष्ट्यादौ तासां सर्वजगद्व्यापित्वं च श्रूयते "सोपोऽसृजत वाच एव लोकात्। वागेवास्य सासृज्यत। सा इदं सर्वमाप्नोत् यदिदं किञ्च। यदाप्नोत् तस्मादपः। यदवृणोत् तस्माद्वा। इति (शतप० १।१।।६।) अयमेव तासां सृष्ट्यादौ सर्व जगद्व्याप्तिप्रकर्षः स इतिहासप्रसिद्धोऽयमपामोघः। तत्राग्निरेव स जलचारी मत्स्यः अथैतासामपां सर्वजगद्योनित्वमामनन्ति। "आपोऽग्रे विश्वमावन् गर्भं दधाना"—इत्यथर्वश्रुतेः (४।२।६) "पश्चिदापो महिना पर्य्यपश्यत्। दक्षं दधाना जनयन्तीर्यज्ञं"—इति ऋक्श्रुतेः (१०।१२१।८) वाजसनेयश्रुतेश्च (२७।२६) तास्वेव स्वरसाहुतिदानेन गर्भमाधाय मनुरिमाः प्रजा जनयामास। अत एवैता आपो मानुष्य उच्यंते स्थावरजङ्गमानां जनित्र्यश्च। यथा "ओमानमापो मानुषीरमृक्तं धात तोका तनयाय शंयोः। यूयं हिष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जनित्रीः (ऋक् सं० ६।५।७)। ततः सृष्टि-

ऋमीऽपि मानवीये स्मर्य्यते—"मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः। तेषामृषीणामाद्यानां पुत्राः पितृगणाः स्मृताः ॥ १ ॥ ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः। देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥ २ ॥ इति स पुनरेतास्वप्सु दध्याज्यादिरसचतुष्टयीमिडां नाम जुहवांचकार। ततः सम्वत्सरे योषिदिडा संबभूव। सेयं पृथ्वी निदानेन। यदप्सु दध्याहुतं तेनापो घनीभूत्वा मृदः सम्पद्यन्ते। यदाज्यमाहुतं तेनात्र मृत्सु तेजश्च दृश्यते स्नेहश्च। तेजो वै घृतमिति श्रुतेस्तेजः खल्वाज्यधर्मः प्रतिपद्यते। यद्यत्र मृत्सु तेजो न स्यात् तर्हि नैता मृदः काष्ठादिरूपा अग्निसंयोगात् प्रज्वलेयुः। स्नेहोऽप्याज्यधर्मः प्रत्यक्षतो दृश्यते। यद्यत्र स्नेहो न स्यान्नैता मृदः परस्परेण संश्लिष्टा दृश्येरन्। अथ यदि मृत्सु माधुर्य्यं न स्यान्न तर्हि ताः कस्मिंश्चिदपि रूपे भक्षणीयाः स्युः। अथ यद्यन्नामृतं न स्यात् किमर्थं तर्हि ता भक्षणीयाः स्युः। अमृतरसलाभार्थमेवान्नमद्यते। अपि च यान्येतान्यन्नान्यहरहर्भक्ष्यमाणान्यपि न क्षीयन्ते सोऽयममृतधर्मो द्रष्टव्यः। अपि चैता मृदस्तत्र तत्र प्राणैर्वियोजिता अपि नात्यन्तं प्राणैर्वियुज्यन्ते। अमृतेनाक्रान्तत्वात्। तदित्थमेतैश्चतुर्भी रसैरप्स्वाहुतैस्ता आपो मृद्रूपेण परिणमन्ते। मृत्पिण्डश्चेयं पृथ्वी संपद्यते इला नाम। अन्नमयत्वाद्धीयमिलानाम्ना व्यपदिश्यते। सेयमिला मित्रावरुणाभ्यां युज्यते।

"तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं कृणुते द्यौरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति"—इति श्रुतेःअहर्वै मित्रं रात्रिर्वरुण इति ब्राह्मणश्रुतेः पूर्वपश्चिमकपालौ मित्रावरुणशब्देनाख्यायेते। उभाभ्यां योगादियं वृत्ताकारा भवतीति मानवी सतीयं मैत्रावरुणी निर्दिश्यते। तस्यामस्यामिलायां बुधग्रहयोगात् पुरुरवा उत्पद्यते इत्याहुः। तस्यायमभिप्रायः। बुधस्तावदयं सूर्य्याद्विप्रकर्षं गच्छन् साधिकसप्तविंशत्यंशान्तरेणावनिष्ठितेन ततोऽधिकं विप्रतिष्ठते। तस्मात् साधिकसप्तविंशत्यंशान्तरेण कृताभ्यां नाडीभ्यामुभयतः स्पृष्टसूर्य्यबिम्बगर्भारब्धा पृथ्वी गर्भविन्दुं स्पृशन्ती चन्द्रकक्षापर्य्यन्तकृता नाडी पुरूरवा नामोच्यते। पुरूरवसा युक्तस्य चन्द्रस्य पितृसन्तर्पणकालतया ब्रह्माण्डपुराणेऽनुषङ्गपादेऽष्टाविंशोऽध्याये व्याख्यातत्वात्। अथोर्वशीतिनिदानेनोत्तरादिगुच्यते तथा च नाडीवृत्तात् साधिकसप्तविंशत्यंशान्तरेणोत्तरां गतश्चन्द्रो यदा पुरूरवसा युज्यते तदायं पुरूरवा उर्वश्या संयुज्यते इत्याख्यानविद आचक्षते। तस्मिन् पितृसंतर्पणे काले पितृसंतर्पणादायुः संभवति। पितृसंतर्पकः पितॄणां शरीरस्थानां सौम्यप्राणविशेषाणामाप्यायनादायुष्मान् भवतीत्यभिप्रायः। तदिदमिलोपाख्यानस्याधिदैविकं तात्पर्य्यमाख्यातम् ॥ केचित्तु कल्पनारसिका अन्यथाप्येतमर्थं प्रकल्पन्ते। तथाहि—बहुरावो मेघः खलु पुरूरवा नामेष्यते। पुरूरवा बहुधा रोरूयते। इति निरुक्तोक्तेः (१०।४।६) रोरूयते स्तनयतीति तद्वृत्तौ दुर्गाचार्य्योक्तेश्च। स एष रोत्व इत्युच्यते। इला पृथिवी तन्नामसुनिघण्टुस्मरणात् पृथिव्याः परितो द्वादशयोजनादधस्ताद्देवाकाशो प्रसरति। स इत्थं पृथिव्यां जातत्वादैल आख्यायते। अथवा इडेत्युर्वरायाः सस्यबहुलाया भूमेः संज्ञा। "नि त्वा दधे वर आपृथिव्या इडायास्पदे

सुदिनत्वे अह्नाम् । इषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि"–(३।२३।४) इति । ऋङ्मन्त्रादिषु तथैव वैदिकव्यवहारश्रवणात् । प्रचुरद्रुमायामुर्वरायामेव तु भूमौ भूयसायं प्रवर्षति न शार्करायामूषरायां वा । तस्मादैड आख्यायते । अथवादिडेत्यन्नसंज्ञा । निघण्टुषु तथा स्मरणात् । अन्नाय हितं भवतीत्यैडोऽयमाख्यायते । अथवा—इरेत्युदकसंज्ञा । उदकादेवायमुत्पद्यते । तस्मादैड इत्युच्यते । स हि गन्धर्वः पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरस इति तैत्तिरीयश्रुतेः ( तै० सं० ३।४।७।१) ॥ उर्वश्यप्सराः—इत्यादिनिरुक्त ( ५।३।२ ) स्मरणादप्सारिणी विद्युदेवोर्वश्यप्सरा विवक्ष्यते । तस्या अप्सरसः पुनरायुर्नाम तनयो जायते । स हि विद्युन्मेघसंयोगजो वृष्ट्युदक रूप एव स्यात् ।

तस्यायुर्हेतुत्वादायुष्ट्वमिष्यते ।"उर्वशी तिरतें दीर्घमायुः" इति ( ऋ० सं० १०।८५।१० ) मंत्रश्रुतेः ॥ तनयोत्पत्यनन्तरं तयोरुर्वशीपुरूरवसोर्विच्छेदश्च सर्वैर्दृश्यते इति तदिदमिलोपाख्यानस्याधिदैवतं तात्पर्यमैतरेयालोचने सामश्रमिणा व्याख्यातम् । अथ मोक्षमूलरो नाम कश्चित्केतुमालवर्षीयो विद्वान् उर्वशीमुषसं पुरूरवसं तु सूर्य्यमाह । एवमनेके विद्वांसोऽन्यथान्यथार्थं प्रकल्पयन्तस्तदाख्यानस्याधिभौतिकत्वं प्रत्याचक्षते इति पश्यामः । इत्थं चैतस्य पौराणिकसमाख्यानस्यानेकधा तात्पर्य्यान्तरे निर्णीते तदनभिज्ञानां शाब्दार्थमात्रनिष्णातानामन्विडाबुधपुरूरवउर्वश्यादिषु मनुष्यबुद्धिः पौरववंशीयमौलिकपुरुषत्वाभिमानं च सत्यादपैयते इति चेत् । तत्रेदमुच्यते । अस्तु तावदिदमाध्यात्मिकमाधिदैविकं चाकूतमस्मिन्निलाख्याने । तथापि स्वारसिकशाब्दार्थप्रत्ययेन प्रतीयमानास्ते वंशमौलिकपुरुषाः कथमिवैकान्ततोऽपह्नोतुं शक्यंते । नहुषस्तावदायोः समीपमाजगाम । आयोश्चात्मावसुप्रभृतयो भ्रातरो गन्धर्वलोकविदिता आसन् । पुरूरवाश्चायं केशिवप्रभृतीन् दैत्यान् विजित्य भृत्यांश्चक्रे—इत्येवमादीन्याख्यानानि मनुष्यत्वाभावे निरवलम्बानि भवेयुः । स येन प्रमाणेनैषामाख्यानानामाध्यात्मिको वाधिदैविको वार्थः प्रतिपद्यते तेनैव प्रमाणेन प्रतीयमानोऽयमाधिभौतिकोऽप्यर्थो नतरां तिरस्कर्तुं युज्यते । न तावद ब्रूमः पौराणिकाख्याने तादृशा आध्यात्मिका अधिदैविका वार्थास्तात्पर्य्यविषयीभूताः सर्वथा न सन्त्येवेति । सन्ति हि पुराणेषु सप्तविधा आख्यानप्रबन्धाः । केचिदाध्यात्मिका एव केचिदाधिदैविका एव, केचदाधिभौतिक एवेति त्रयः । द्वयोर्द्वयोः सांकर्य्यात् पुनरन्ये त्रयः । त्रयाणां सांकर्य्यादेकश्चेति । तत्र यान्यन्येवाख्यानानि वैदिकानि संहिताब्राह्मणयोर्यथाकथंचिदुपलभ्यन्ते । तेषां सर्वेषामाधिभौतिकानामेव सतामाधिदैविका आध्यात्मिकाश्चार्थाः प्रायेणोपपद्यन्ते इति पश्यामः । अत एवेदमिलाख्यानमप्यस्ति वैदिकमिति त्रयाणां सांकर्य्यात् सप्तमविधं स्यात् । का नो हानिः । यथा तावदग्निमन्थनकर्मणि पुरूरवा इत्युत्तरारणिमाह, उर्वशीत्यधरारणिम्, आयुरिति चाज्यम् । इति यजुर्मन्त्रसंहितायां श्रूयते । यथा वा—भवान् पुरूरवा इति पितृसंतर्पणी नाडीमुत्प्रेक्षते । उर्वशीति विद्युतम् । आयुरिति वृष्टिम् । एवमेवात्र वयमध्यवस्यामः—पुरूरवा ऐलेयो राजासीदुर्वसी गन्धर्विणी । आयुरिति च तयोः

संयोगफलरूपः पुत्र इति । भूयांश्चायं चमत्कारः पौराणिकाख्याने दृश्यते । यदस्मिन्नैतिहासिकेऽपि प्रबन्धे क्वचित् क्वचिदस्ति वैज्ञानिकोऽप्यर्थः सन्निविष्ट इति । तत्रायमैतिहासिकत्वपक्षोऽस्माकं प्रबलो युक्तिसिद्धश्च । ऐतिहासिकत्वे तावदाधिदैविकाद्यर्थानामनुषङ्गादेवोपपत्तेस्तत्र तत्र वक्ष्यमाणत्वात् । कल्पनामात्रसारैराधिदैविकाद्यर्थैः स्वारसिकप्रतीतिसिद्धैतिहासिकार्थानां बाधानौचित्याच्च । यत्तु तात्पर्य्यसांकर्य्येणोपपन्नेष्वाख्यानेषु महता यत्नेनोद्भाविता कल्पनामात्रसारा आध्यात्मिका आधिदैविका वार्था नूनं कथंचिच्चूछ्रीयते । स्वारसिकास्तु श्रुतिस्मृतिसिद्धा युक्तिसिद्धाश्चाधिभौतिका अर्था निष्कारणमपलप्यन्ते । तदिदं प्राज्ञंमन्यानां बालप्रज्ञानां दुःसाहसमात्रम् । अष्टचक्रा नवद्वारा देवानां पूरयोध्या । तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषा वृतः ॥ १ ॥

तस्मिन् हिरण्मये कोशे परे विप्रतिष्ठते । तस्मिन् यद्यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः" (अथर्व० सं० १०।२।३१-३२) इत्यथर्वणश्रुतावाध्यात्मिकायोध्यानिरूपणादाधिभौतिकीयमयोध्या किं सर्वथाप्यपलपितुं युज्यते ।

"अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव मन्येत तदविमुक्तमेव । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे । य एषोनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति । वरणाया नाश्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नाशीति । सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवति । सर्वानिन्द्रियकृतान् पापान् नाशयति तेन नाशी भवति । कतमच्चास्य स्थानं भवति भ्रुवोर्घ्राणस्य च यः सन्धिः । स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति" ॥

इत्याद्युपनिषच्छ्रुतेरविमुक्तवाराणस्या आध्यात्मिकत्वे निर्णीते किमियमाधिभौतिकी काशी नितान्तमपलपितुं युज्यते । नैतदस्ति । प्रमाणसिद्धस्यानपलप्यत्वात् । एवमन्यत्रान्यत्रापि नामसाम्याद्धर्मसाम्याच्चाधिभौतिकेनार्थेनानुगृहीतैराध्यात्मिकाधिदैविकैरानुषङ्गिकोपदेशफलकार्य्यैः स मूलस्तम्भभूतः प्रमाणान्तरसिद्धोऽर्थो न कदाचित् तिरस्कर्तुं युज्यते—इति भाव्यम् । तस्मादियमासीच्छ्राद्धदेवस्य मनोः पुत्री काचिदिलानाम्नी प्रतिष्ठानपुराधिष्ठात्रीति सिद्धम् ॥

अथात्र पुनरन्ये प्रत्यवतिष्ठन्ते । इदमिलाख्यानं स्मृत्यन्तरविसंवादादप्रमाणम् । वेदे तावदियमिला जन्मत एव स्त्रीभूता मनोः पुत्रीत्याख्यायते । पौराणिकास्तु जन्मतः पुरुषं सुद्युम्नं नाम सूर्यवंशीयं राजानं मनोः पुत्रमाख्याय तस्य शिवकोपात् स्त्रीत्वं पुनरिक्ष्वाकुकृतादश्वमेधात् पुंस्त्वप्राप्तिं चाचक्षते । इक्ष्वाकुस्तु सुद्युम्नभ्राता मनोः पुत्रः सूर्य्यवंशीयः । अथ रामायणे वाल्मीकीये भगवान् रामचन्द्रस्तु जन्मतः पुरुषं कर्दमस्य मुनेः पुत्रं वाह्लीकाधीश्वरं वाह्लीकजातीयं कंचिदिलं नाम राजानं शिवप्रकोपात् स्त्रीत्वं गतमाख्याय संवर्तशिष्येण मरुत्तनाम्ना राज्ञा कृतादश्वमेधात् तस्य पुंस्त्वप्राप्तिमाचष्टे । मरुत्तश्चायमविक्षितः पुत्रः सूर्य्यवंशीयः तेन मरुत्तसमकालोऽय-

मिलः सिध्यति नेक्ष्वाकुसमकालः । अपि च पुराणेतिहासेषु कनखलसंनिधाने पुरुनाम्नि कस्मिंश्चित्पर्वते पुरूरवसो जन्माख्यायते । रामायणे तु कार्तिकेयजन्मस्थाने श्वेतगिरौ पौष्युत्तरकृष्णपक्षे पुरूरवसो जन्मोच्यते ॥ तदित्थं वहुष्वंशेषु भेदात् किं तत्वमिति यथावन्न निर्णीयते तस्मादप्रमाणम् ॥ इति ॥

अत्र ब्रूमः । कथाशेषांशानामनाख्यानादंशतः क्वचिद्विरोधप्रतीतावपि नेदमाख्यानमप्रमाणम् भवितुमर्हति । श्रुतिस्मृतिसिद्धत्वादुपपन्नत्वाच्च । यत्र त्वंशे विरोधः प्रतीयते तत्रोभयवाक्यप्रामाण्यादनुक्तोऽप्यंशः कथञ्चिद् हितव्यो भवति । महार्था ह्याचार्या अर्थगौरवात् कांश्चिदर्थान् सुस्पष्टशब्देनाचक्षते । कांश्चिद्वा पुनरिङ्गितेन चेष्टितेन च तर्कद्वारा प्रत्याययितुमीहन्ते इति हि प्राचामाचार्य्याणां भाषाशैली प्रत्येतव्या । तथा चार्थाः समन्वयेन नेतव्याः । तद्यथा प्रकृते कर्दमस्य ब्राह्मणस्य कस्यचन तपस्विनः पुत्रोऽयमिलो वाह्लीकाधीश्वरोऽत्युग्रप्रतापश्चेह वर्ण्यते । किन्तु ब्राह्मणो भूत्वा स कथमीदृशो महाप्रतापः क्षत्रियाणां प्रवरो मूर्द्धाभिषिक्तोऽभूदिति नाख्यायते । तत्रेदमभिसंधेयम् । पुरात्वेऽस्मिन् दैव्ये युगे द्विविधः खलु वंशो व्यवतिष्ठते स्म जन्मना विद्यया चेति । जन्मना कृताः पुत्रा औरसा उच्यन्ते, विद्यया तु मानसाः । तद्यथाऽन्यपुत्रा एव दक्षादयः पुरा ब्रह्मणो मानसपुत्रा इष्यन्तेस्म । एवमयमिलो राजा मनोरेवौरसः पुत्रो भूत्वा कर्दमस्य गुरोर्मानसः पुत्र आसीत् । तं केचिदैतिहासिकाः औरसदृष्ट्या मानवं मनोः पुत्रमाचक्षते । केचिद्वा मानसदृष्ट्या कार्दमिं कर्दमस्य पुत्रमाहुः । नात्र कोपि विरोधः । ऐतिहासिकपुरातत्वाभिज्ञानादत्र विरोधप्रतीतावप्यर्थतो विरोधाऽनवस्थानात् ॥ १ ॥

इलः सुद्युम्न इत्येकस्यैव नामद्वयं पौराणिकैः स्मर्य्यते । अन्येऽपि तस्येक्ष्वाकुप्रभृतयो भ्रातर आसन् । तेषां ज्येष्ठोऽयमिलः सुद्युम्न आसीत् । तमस्य पिता मनुर्यक्षुगङ्गाया उत्तरतो वाह्लीकराजधान्यां राज्यसिंहासने प्रतिष्ठापयामास । मनुस्त्वेष तदानीं भूमध्यसागरतः पूर्वोत्तरे संप्रत्यारमीनिया नाम्ना प्रसिद्धे देशेऽरारातपर्वतस्योपत्यकायामासीत् ॥ न न्विदं वाह्लीकं नगरं पुरूरवसमारभ्य सप्तचत्वारिंशत्तमेन राज्ञा वाह्लीकेन प्रतीपपुत्रेण निर्मितमित्यैतिहासिका आहुः । तत्कथमस्य पुरूरवसोऽपि प्राक्तनस्यैलस्य वाह्लीकेऽवस्थानं प्रतिज्ञायते—इति चेत्सत्यम् । यत एवास्य वाह्लीकनगरस्य पौरवात् प्रतीपात् प्राक्तनेऽपि काले सत्ता स्मर्य्यते । तस्मात् पुरातनेन केनचिदपौरवेण वाह्लीकेनेदं पुरं विनिर्मितं स्यादित्यध्यवस्यामः । न च तर्हि "वाह्लीकः प्रतिपीयः शुश्राव"—( शत. १२ । ३ । ३ )—इति श्रुतिवचनं विरुद्ध्येतेति वाच्यम् । वाह्लीकपितुः प्रतीपस्यापि पौरवप्रतीपादन्यत्वेनादोषात् । अथवा रामायणे तत्र वाह्लीकपदं स्थानोपलक्षणम् । यत्रेदानीं वाह्लीकनगरं वर्तते तत्रैव स्थाने नामोत्तरेणोपनिविष्टायां राजधान्यामिलो राजा राज्यं चक्रे इत्यभिप्रायः । इक्ष्वाकुस्तु तस्मात् प्रदेशादागत्य सरयूतीरेऽयोध्यां नाम नगरीं निर्माय तत्र प्रतिष्ठितोऽभूत् ॥ २ ॥

अथैष सुद्युम्न इलो मानवः पुत्रो जन्मना पुरुषोऽपि सन् यज्ञप्रक्रियादोषात् स्त्रीधर्मा स्त्रीलक्षणबहुलः पश्चात् शरवणे सर्वथा स्त्रीभूत्वा मनोः पुत्री—इलानामाऽभूत् । यत्तु श्रुतौ जन्मतः स्त्रीत्वमिलायाः श्रूयते इह तु पश्चादुत्पन्नं वैकारिकं स्त्रीत्वमाख्यायते—इत्यापातविरोधः प्राप्नोति–इत्याहुः । तत्रेदमनुसन्धेयम् । श्रुतौ तावदिलायाः मनुषजात्याख्यानेऽपि जन्मतः स्त्रीत्वं नाख्यायते । अथवा वैकारिकमिलायाः पश्चादुत्पन्नं स्त्रीत्वं श्रुतिवचनादेवावगम्यते । तथाहि—मनुमागतेयमिला—"कात्वमसीति" मनुना पृष्टा "तव दुहिताऽहमस्मीति" प्रत्याह । कथं भगवति मम दुहितेति पुनः पृष्टा—या अमूरप्स्वाहुतीरहौषीर्घृतं दधिमस्त्वामिक्षां ततो मामजीजनथा"—इति पुनः प्रत्याह । तदनेन प्रश्नोत्तरवाक्येनास्य मनोः प्रजार्थयज्ञफलरूपः सुद्युम्न एव पुत्र आसीत् । तं चायं मनुरपि स्वपुत्रत्वेन जानान एवासीत् । किन्तु कालेनास्य स्त्रीत्वे जाते सेला पितरं मनुमागत्य यदा "तवाहं दुहिताऽस्मीति" अवोचत् तदा तां दुहितरमजानानो मनुः—"कथं मम दुहितासीति" पप्रच्छ । तत्र यदि जन्मत एव यज्ञफलतया दुहिताऽभविष्यत् स तर्हि मनुः स्वस्य दुहितृज्ञानं नाविरभावयिष्यत् । तस्मान्मनुपुत्रः सुद्युम्नः पूर्वं पुरुष एव सन् पश्चान्मनुपुत्रीयमिला बभूवेति श्रुत्यक्षरस्वास्यादवगम्यते ॥ ३ ॥

अथ मरुत्तकृतादश्वमेधादिलायाः पुंस्त्वप्राप्तिरित्यपि न विरुद्ध्यते । इक्ष्वाकुषदस्य मरुत्तस्यापि तदर्थं पृथगश्वमेधकरणे बाधकाऽभावात् । इलायाः पुंस्त्व लाभार्थं सोदरत्वस्नेहेनायमिक्ष्वाकुरयोध्यायां यथाश्वमेधं चक्रे तथैवान्यत्र बुधाश्रमसमीपे श्वेतपर्वतादुत्तरतः कश्चिद्देशे मरुत्तोऽपि कर्दमवचनादश्वमेधं चक्रे इति संभवति । अनेके च मरुत्ता वंशग्रन्थे निर्दिश्यन्ते । तत्रातितरां प्रसिद्धोऽविक्षितः पुत्रो महोग्रप्रतापः सार्वभौमः आसीत् स नेह विवक्ष्यते । सुद्युम्नसोदरभ्रातुर्नाभान्नेदिष्टादुत्तरस्य चतुर्दशस्य मरुत्तस्य सुद्युम्नकाले सम्भवाऽभावात् । एवं ययातिपुत्रस्य तुर्वशोर्वंशे सप्तमो मरुत्तः स्मर्यते सोऽपि नेह संभाव्यते । पुरूरवस ऊर्ध्वं तस्यैकादशत्वात् तदानीं तत्समन्वयायोगात् । तथा चान्येषामसंभवाद् भारतवर्षातिरिक्तदेशजन्मा गन्धर्वादिजातिगतो बुधस्य सखा कश्चिदयं संवर्तशिष्यो मरुत्तः स्यात् । स बुधादेशात् बुधाश्रमेऽश्वमेधं चक्रे—इति बोध्यम् । ऐतिहासिकास्तु स्वस्वाभानुसारेणार्थानुल्लिखन्ति—इति नियमात् कैश्चिन्मरुत्तयज्ञो निर्दिष्टः कैश्चिद् वैक्ष्वाकुयज्ञ इत्युभयं समञ्जसम् । तस्मादियमासीच्छ्राद्धदेवस्य मनोः पुत्री काचिदिलानाम्नी प्रतिष्ठानपुराधिष्ठात्रीत्यर्थे सर्ववचनानां सामञ्जस्यदर्शनात् विसंवादाभावात् प्रामाण्यं सिद्धम् यदप्यस्य पुरूरवसो जन्मनि विप्रतिपत्तिराख्यायते तदपि विभ्रान्तम् । कार्तिकेयजन्मस्थानस्य श्वेतपर्वतस्य सन्निधानेऽपि पुरूपर्वतस्य कस्यचित् संभवात्तत्रैवास्य जन्मोपपत्तेरुपपादनीयत्वात् । तस्मादविसंवादात्सर्वं समञ्जसमिति सुनिभृतं सिद्धम् । तदित्थं मतत्रयमत्र व्याख्यातम् ।

परे त्वत्र चतुर्थं मतमातिष्ठन्ते । पुंसः स्त्रीत्वभावापत्तिं स्त्रियो वा पुंस्त्वभावापत्तिमदृष्टश्रुतामेकान्ततोऽसंभाव्यमानां मन्यमाना बालप्रज्ञा अस्याः स्त्रीत्व-

भावापत्तिकथाया अन्यदेव किञ्चिद्रहस्यमुपवर्णयन्ति । तथाहि—वैवस्वतमनोरिक्ष्वाकुप्रभृतयः सुद्युम्नान्ता दशपुत्रा आसन् । इला नामैकान्या कन्या चासीदेकादशी संततिः । सा च सर्वज्येष्ठासीत् । अतः पृथ्वीविभागकाले तस्यै सर्वज्येष्ठायै भगिन्या अपि ते भ्रातरो विभागमिच्छन्तः सन्तोषार्थमस्याः स्नेहात् स्त्रीधनत्वेन गन्धर्वदेशे प्रतिष्ठानपुरं ददुः । सुद्युम्नाय विलापरलाम्ने भरतखण्डस्य पूर्वदक्षिणप्रदेशाः समर्पिता आसन् । अथेलाया बालिशतया तस्या अनाथाया राज्यकार्यं कर्तुमक्षमत्वात् तत्परिरक्षणे सुद्युम्नो भ्राता नियुक्त आसीत् । तत एव स्वराष्ट्रस्य त्रीन् विभागान् कृत्वा पूर्वभागं गयार्थे मध्यमं तु दक्षिणमुत्कलार्थे पश्चिमं विनताश्वाय विभज्य दत्वा सस्त्रीकः स्वयं गन्धर्वदेशे प्रतिष्ठानपुरे जगाम । तत्र चैष सुद्युम्नो बाह्लीकं नाम नगरं स्वकीयोपनिवेशाय प्रातिस्विकं पृथगर्जयित्वा तत्रैवावस्थाय स प्रतिष्ठानपुराधिष्ठात्र्या इलायाः राज्यप्रबन्धं निरीक्षतेस्म । अथ कालेन तत्र बाह्लीकनगरेऽप्यस्यान्यः पुत्रः शशविन्दुर्नाम जज्ञे ॥

एकदा सुद्युम्नेन साकं मृगयां गतायास्तस्या इडायाः सहयायिनः सुद्युम्नादयः सर्वे पुरुषाः क्वचित्पर्वते यक्षावासगुहास्थानेऽवस्थायात्यत्रान्यत्र वने विचेरुः । प्रसङ्गात् ते सर्वे कुमारजन्मस्थाने श्वेतपर्वतोऽधित्यकायां शरवणे जग्मुः । तत्र च गणैः प्रतिषिद्धानां तेषां पुरुषाणां कुमारवनस्यान्तर्वनेऽस्मिन् शरवणे प्रवेशो नाभूत् । अन्तर्वने हि तत्र भगवतः शंकरस्य विहारस्थानमासीत् । तत्र चैकदा पार्वत्या सह स्वेच्छाविहारकालेऽकस्मात्तत्र सनकादयो जग्मुः । तेन परिक्रुद्धः शङ्करो भगवान् स्वसैनिकान् परिचारकान् गणनाम्ना प्रसिद्धानादिदेश । अत्र वने पुरुषैर्न प्रवेष्टव्यमिति । तथा च वनस्वामिनो रुद्रस्य भगवतो बलवन्निदेशात् प्रतिषिद्धप्रवेशास्ते सुद्युम्नादयः सर्वे पुरुषास्तस्मात्कुमारवनाद् बहिरेव तस्थुः । केवलाभिः स्त्रीभिः परिचारिकाभिरेव सार्द्धं सेला कुमारवने विहृत्यापरस्मिन् वनोपान्ते समायाता सा तत्राऽकस्मात् सोमस्य राज्ञः पुत्रेण बुधेन संगता दाम्पत्यसम्बन्धेन परस्परानुरागमासाद्य संभूय चाहितगर्भा बभूव । प्रबलेन राज्ञा बुधेन सह गान्धर्वविवाहसम्बन्धमस्या विज्ञाय सुद्युम्नः परां चिन्तामाजगाम । इयं हीला स्वसाहाय्यागतं बुधमेव गृहीत्वा राज्यकार्ये नियोक्ष्यति । प्रबलश्चायं सोमो गन्धर्वाणां राजा ममाधिकारं निरस्य प्रतिष्ठानपुरराष्ट्रं स्वराष्ट्रे संसृज्य पृथग्भूतां राज्यसंस्थामपहरिष्यति । अथवा स्त्रिय एवेदं राज्यं स्यात् । ममाधिकारः सर्वथाऽस्माद्विलुप्येत । इत्येवमनेकधा चिन्तयित्वा बुधेन सह योद्धुमात्मनि शक्तिमनासाद्य स सुद्युम्नः स्वकुलपुरोहितं प्रतिष्ठितं नीतिकुशलं वशिष्ठमाहूय तेन सहोपायं मन्त्रयामास । वसिष्ठस्तु सुद्युम्नप्रार्थनां श्रुत्वा सोमस्य राज्ञोऽप्यधिष्ठातारं भद्रवटस्थं रुद्रमेव शरणमाजगाम । रुद्रो हि त्रैलोक्यान्तर्वर्तिनोऽन्तरिक्षस्य सर्वस्यैकोऽधिष्ठाता इति तैत्तिरीयकादिश्रुतिष्वनेकधा श्रूयते । अन्तरिक्षे चायं गन्धर्वलोकः सोमस्य राष्ट्रं 'सोमो वै राजा गन्धर्वेष्वासीत् इति' । द्यावापृथिव्योर्वा एष गर्भो यत् सोमो राजेति चैतरेयके तथा श्रवणात् । तस्मादन्तरिक्षस्थानां सोमकुबेरादीनां सर्वेषामेव राज्ञामयमध्यक्षः शास्तेति व्यवस्थापयन् वसिष्ठो

रुद्रमागच्छत् । रुद्रस्तु भगवान् परमदयालुरुभयोरेवानुरोधं चक्रे । एकान्तरित-मासक्रमेण षण्मासांस्तत्र प्रतिष्ठाने सुद्युम्नः पुरुषो राज्यं शास्तु । षण्मासांस्तु तथैव सेला सिंहासनमधिष्ठाय राज्यं करोत्विति व्यवस्थया तयोरुभयोरधिकारं स्थापयामास । रुद्रनिदेशाच्च सोमस्तत्र न किंचिदकरोत् । सुद्युम्नस्तु स्वराज्ये वाह्लीक-राज्यासने स्वपुत्रं शशविंदुमध्यारोप्य स्वयमिलाया राजधान्यां प्रतिष्ठानपुरे षण्मासान्तरव्यवस्थया राज्यकार्य्यं यथावन्निर्वाहयामास । किन्तु भगिन्यै दत्ते राज्ये पुनस्तत्र स्वाधिकारं संपादयन् सुद्युम्नः प्रजानां विरक्तिभाजनमभूत् । तस्मादिलायाः पुत्रे पुरूरवसि जाते तारुण्यं च प्राप्ते सर्वाः प्रजाः सर्वे च मन्त्रिणस्तं पुरूरवसमेव सिंहासनेऽधिष्ठापयामासुः । प्रजानां मन्त्रिवर्गाणां च तत्रानुरागं दृष्ट्वा सुद्युम्नोऽपि तमेव राज्येऽवस्थाप्य स्वयमुपरतो वनं जगाम । तस्त ज्येष्ठः पुत्रः शशविन्दुर्वाह्लीके राजासीत् । तत्रैतस्मिन् स्त्रीराज्ये स्वाधिकारसम्पाद-यितुरस्य लोभग्रस्तस्य सुद्युम्नस्यैयमुपहासक्लृप्तिर्लोके यत्र तत्र प्रवृत्ते । राज्य-गृध्नुरयं सुद्युम्नः षट्सु मासेषु स्त्रीभूत्वा षट्सु च पुरुषो भूत्वा राज्यं शास्तीति उपहासभाषेयं लोकस्य प्रतिदेशं प्रसिद्धाऽभूत् । न तु वस्तुत एव स कदाचित् स्त्रीबभूवेति भावयितुं युक्तमिति दिक् । इति चतुर्थमतम् ॥ ४ ॥

अत्राहुः—इलासुद्युम्नयोस्तादात्म्यस्य बहुभिरैतिहासिकैः स्मरणान्नैतदेकान्त-तोऽपलपितुं शक्यते । एकस्या एव व्यक्तेः स्त्रीत्वेन च पुंस्त्वेन चोभयथा स्मरणात् तत्र मनोः पुत्रेष्टिकर्मणि विध्यपचाराद्दशमी सन्ततिः स्त्रीपुंलक्षणाक्रान्ता वैकारिकी जज्ञे । अत्यल्परेतस्कतया षड्भिर्मासैरत्र शुक्रं संचीयते स्म । बहुभिः प्रकारैर्नपुं-सकताया लोके दर्शनादीदृशमप्येकमुभयलक्षणाक्रान्तं नपुंसकत्वमीश्वरसृष्टौ न न संभाव्यते । इत्यास्थेयम् । तथाचोक्तं तावद् वैष्णवे चतुर्थेंशे—

इष्टिं च मित्रावरुणयोर्मनुः पुत्रकामश्चकार । तत्रापहृते होतुरपचारादिलानाम कन्या बभूव । सैव च मित्रावरुणप्रसादात् सुद्युम्नो नाम मनोः पुत्रो मैत्रेयासीत्"—इति ब्राह्मेऽप्याह—

"अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः ।
मित्रावरुणयोरंशे मनुराहुतिमावपत् ॥ १ ॥
दिव्यसंहनना तस्मादिला जज्ञे इति श्रुतिः ।
सोमपुत्राद्बुधाद्विप्रास्तस्यां जज्ञे पुरूरवाः ॥ २ ॥
जनयित्वा ततः सा तमिला सुद्युम्नतां गता ।
सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ॥ ३ ॥
कन्याभावात्तु सुद्युम्नो नैतद्राज्यमवाप्नुयात् ।
वसिष्ठवचनात्त्वासीत् प्रतिष्ठाने प्रतिष्ठितः ॥ ४ ॥
मानवोऽयं मुनिश्रेष्ठाः स्त्रीपुंसोर्लक्षणैर्युतः ।
धृतवान् स इलेत्येवं सुद्युम्नेति च विश्रुतिम् ॥ ५ ॥ इति ॥

तथा चेयं स्त्रीपुरुषोभयलक्षणा विलक्षणाकृतिरिला मनोर्वैवस्वतस्य कन्यासी-दित्येव तत्वम् ॥

सा हीयं मनोः पुत्री प्रतिष्ठानपुराधिष्ठात्री महाराज्ञी कदाचित् सोमसुतेन बुधेन सङ्गताऽऽसीत्। तं च स्वपतित्वेन वरयामास। गन्धर्वदेशे चाग्निसाक्षिकस्य विवाहविधेः प्रथा नाऽऽसीत्। केवलमन्योन्यानुरागमात्रेणैव गन्धर्विण्याः पाणिं गृह्णानो गन्धर्वस्तस्याः पतित्वेन तत्र प्रतिपद्यते स्म। तथा चैतेन गान्धर्वेण विवाह-विधिनाऽव्यूढा सेला बुधस्य पत्नी बभूव।

तस्यां चेलायामस्य बुधस्य पुरूरवा नाम पुत्रो जज्ञे इति स्थितम्। स चायमैलः पुरूरवाश्चन्द्रवंश्यानां प्रथमः पुरुष आसीत्। यद्यपि बुधस्यैव चन्द्रवंशे प्राथम्यं वक्तुमुचितम्। तथापि तस्य बुधस्य सोमवद् गन्धर्वजातीयत्वेन देवनिकायान्तर्गत-त्वात् मनुष्यत्वेनाभिप्रेतानामेषां क्षत्रियवीराणामैलप्रकृतिकत्वमेवास्थीयते। तस्य मानव्यामिलायामुत्पत्त्या मनुष्यत्वात्॥ इति बोध्यम्॥

ब्रह्मा चात्रिश्चन्द्र एवं बुधश्चेत्येते देवाश्चन्द्रवंशादिभूताः।
यद्यप्येते मानवाः किन्तु तेऽस्थुः स्वर्गे, नैते भारतोर्वी मनुष्याः॥ १॥
ब्रह्मादीनां बुधान्तानां न मनुष्यत्वमिष्यते।
ततोऽग्रे चन्द्रवंशोऽयमैलप्रकृतिरुच्यते॥ २॥

इति श्रीमधुसूदन विद्यावाचस्पतिकृता पौरवख्यात्यन्तर्गता
समाप्तेयमत्रिख्यातिः॥



* श्रीः *

# त्रुटिपाठपत्रम् ॥

| पृ० | पं० | |
|---|---|---|
| ७ | १३ | कथमित्यतः पूर्वं "अत्रिरुवाच" इति पठनीयम्। |
| १० | २४ | त्रयः पुत्रा अत्रेरुद्बभूवुरित्युक्तमित्यतोऽग्रे "य एते प्राणाः परिक्षुब्धा उष्णा अभवन्। तत्रायमुत्पन्नोऽग्निरेव स स्वयंभूरात्मा। उष्णानां भूयः क्षोभेऽग्नितापात् परिक्लिन्ना बहवो द्रवा भूत्वा आपोऽभवन्"। इति विशेषपाठः संनियोज्यः ॥ |
| २७ | ४ | वीर्य्यादित्यतोऽग्रे 'मानसपुत्रः' इति पठनीयम्। |
| ३५ | २५ | श्वेतगिरीत्यतोऽग्रे 'निषधगिरिः' इत्यधिकं भावनीयम्। |
| ४७ | २३ | विड्डहरा—इत्यग्र 'तपः–उग्रः–मयोभूः–आपोदेव्यः इत्यष्टौ देवमनुष्य-राजा लोकपाला आसन्' इत्यधिकपाठो वर्धनीयः। |
| ५२ | ३२ | केन्द्रस्थानीत्यग्रे 'चतुः स्वस्तिक नामानि' इत्यपि पठनीयम्। |
| ६१ | ७ | अस्यां पङ्क्तौ श्लोकसङ्ख्यान्ते–'इति–' इत्यधिकं द्रष्टव्यम्। |
| ६१ | २० | चोक्तमित्यतः पूर्वं 'प्रतिष्ठानस्य पूर्वदिग्वर्तित्वं' इत्यधिकं योज्यम्। |
| ६२ | ३ | तेनेत्यग्रे 'प्रयागे प्रतिष्ठाने–इत्यभेदोक्तिः साधु संगच्छते। प्रतिष्ठानात्' इति पाठः संनिवेश्यः। |
| ८० | २० | स्त्रीभावमाजगामेत्यग्रे–स, इत्यधिकं पठनीयम्। |
| ८३ | १२ | तच्च स्थानं त्रयस्त्रिंशदक्षांशदेशीयमित्यतोऽग्रे 'प्रतिष्ठानपुरं तु सार्द्ध-चतुस्त्रिंशदक्षांशदेशीयम्' इत्यधिकं त्याज्यम्। |
| ९२ | ६ | दरण्यं कुमारवनं नाम। इत्यतोऽग्रे–'तत्र कचिन्मन्दारद्रुमाः क्वचिदशोक-लतिकाः शोभन्ते–' इत्यधिकं पठनीयम्। |
| ९३ | ३२ | भविष्यति–इत्यग्रे 'मतान्तरे तु मासं पुंस्त्वे मासं स्त्रीत्वे भविष्यति' इति विशेषपाठस्तत्र योज्यः। |
| १०६ | ३४ | निघण्टुस्मरणादित्यग्रे 'पृथिव्याः संबन्धेनैवायं मेघः' इत्यपि पठनीयम्। |
| १०७ | ३५ | उर्वशीत्यतः प्राक् 'उर्वशीत्युत्तरां दिशम्। आयुरिति दीर्घजीवितम्। यथा वा कश्चित् पुरूरवा इति मेघमुत्प्रेक्षते–'इति विशेषं द्रष्टव्यम्। |

# शुद्धिपत्रम् ॥

| पृष्ठ | पं० | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ७ | २ | परागत्व | परायत्व |
| ७ | ४ | शक्नुवन् | शक्नुवन् |
| ७ | ३१ | मासाया | मासाय |
| ८ | ३ | यज्ञ | यज्ञे |
| ८ | ११ | सव | सर्वं |
| ८ | १६ | तृतीऽस्य | तृतीयस्य |
| ८ | २३ | पुत्रम् | पुत्रं |
| ११ | ६ | पोद्धाते | पोद्घाते |
| १२ | १ | समुद्रायां | मुद्रायां वाऽनसूयायां वा |
| १२ | ४ | भ्रान्तकत्वत् | भ्रान्तत्वात् |
| १२ | १६ | पक्ष | पक्षं |
| १२ | १८ | पोद्धाते | पोद्घाते |
| १२ | २३ | आधदैवका | आधिदैविका |
| १३ | ४ | मण्डल | मण्ड |
| १३ | २८ | सृजद्यं | सृजद्यं तु |
| १३ | ३२ | पन | एत |
| १४ | १२ | मृग्व | भृग्व |
| १४ | १८ | हविर्धाना | वहिर्धाना |
| १४ | ३२ | भृगुवारुणि | भृगुर्वारुणि |
| १५ | १ | भजन | भर्जन |
| १५ | ४ | द्दनर्थ | द्व्यर्थ |
| १५ | २६ | ब्रह्मण | ब्रह्माण |
| १५ | २६ | मतम् | गताः |
| १५ | २६ | पुराणोक्तः | पुराणोक्तैः |
| १५ | ३० | भारियात्रा | मारिषाया |
| १६ | ५ | इह हि हि | ( २० ) इह हि |
| १७ | २५ | ख्याते | ख्याने |
| १८ | १३ | प्राणाघन्ते | प्राणघनो |
| १८ | १३ | एतद्ु | तद्ु |
| १८ | १४ | गादिमय | गादिभूतमय |

| पृष्ठ | पं० | अशुद्धपाठः | शुद्धपाठ; |
|---|---|---|---|
| १८ | १८ | तस्यादीनि | तस्यादित्या |
| १८ | १८ | तत्रादीनि | तत्रादिति |
| १८ | २ | ऽधीयते | ऽवधीयते |
| १८ | १० | तथा | यथा |
| १६ | ११ | दीप्यते | दीयते |
| २१ | ८ | तिष्ठतम् | तिष्ठताम् |
| २१ | २६ | मेनवैकृतमति | मेतवैकृतमेति |
| २१ | २७ | प्रतिष्ठति | प्रतिष्ठेति |
| २१ | ३१ | गन्तव्यातू | गन्तव्यत्वात् |
| २२ | १६ | मिनन्त | मिन्नन्ता |
| २४ | १० | हवेन्द्र | ह्वेन्द्र |
| २५ | ११ | ( ५ ) | ( ४ ) |
| २५ | १२ | संवाद | संवादा |
| २५ | १६ | उपस्थितायां | उपस्थितायाः |
| २६ | २ | भद्राश्व | भद्राश्व |
| २६ | ३ | भ्रान्त | भ्रान्तं |
| २६ | २८ | सम्बन्धेनेवायं | सम्बन्धेनैवायं |
| २७ | २ | प्रापत् ॥ ० ॥ | प्रापत् । तस्यसोम इति नामान्तरम् । |
| २७ | ३ | तस्यसोम इतिनामान्तरम् | × |
| २८ | १५ | पश्यत् | पश्यत |
| २८ | २३ | तन्वाना | तत्वाना |
| ३० | ४ | पद्यत् | पद्यत |
| ३० | १७ | क्रमणे | क्रमेण |
| ३० | २६ | देहिनीं | देहिनां |
| ३२ | २३ | मरुत् | मरून् |
| ३२ | २१ | सभा | संभा |
| ३३ | २८ | राणेषु | पुराणेषु |
| ३५ | १७ | स्ताश्वे | सास्तश्वे |
| ३५ | २७ | पुष्य | पुष्प |
| ३६ | ७ | यभः | यज्ञः |
| ३७ | २१ | नैतै | नैतौ |
| ४० | १२ | काम | कामं |

| पृष्ठ | प० | अशुद्ध पाठाः | शुद्धपाठाः |
|---|---|---|---|
| ४१ | २७ | स्वागतेः | स्वागतैः |
| ४२ | १ | दय | दयं |
| ४२ | २१ | इथं | इत्थं |
| ४३ | ७ | मन्त्र | यन्त्र |
| ४३ | २० | वायश्चे | वायवश्चे |
| ४३ | २८ | हरण | हरणं |
| ४५ | ६ | गत्र | यत्र |
| ४७ | २२ | गन्धर्वस्व- | गन्धर्वस्वा- |
| ४८ | ३१ | कूपराद्यः | कूपाराद्यः |
| ४८ | १६ | प्रतिनिध्ये | प्रातिनिध्ये |
| ५० | १८ | परिमां | रिमां |
| ५० | ३ | पल्यै | पत्यै |
| ५० | १३ | उल्कुषा | उल्कुषी |
| ५१ | ३१ | ग्रहीत | ग्रहीत् |
| ५१ | १ | मा | सा |
| ५१ | ३ | भ्रियन्ते | म्रियन्ते |
| ५२ | २० | याना | योना |
| ५२ | १ | संपातिक | सांपातिक |
| ५३ | १३ | स्वदेश | खदेश |
| ५३ | २ | न्य | न्या |
| ५३ | ७ | चन्द्री | चन्द्रः |
| ५३ | ८ | पात | पाती |
| ५३ | ६ | वल | बल |
| ५३ | २४ | सूय्य | सूर्य्य |
| ५४ | २२ | नैवपपादित्वोद | नैवोपपादितत्वाद् |
| ५६ | १३ | क्षत्रिणो | क्षेत्रिणो |
| ५६ | २४ | क्षत्रे | क्षेत्रे |
| ५६ | २४ | राहिण्याः | रोहिण्याः |
| ५७ | १२ | बुधनैव | बुधेनैव |
| ५८ | ३४ | निर्यातुः | निर्मातुः |
| ५९ | १० | ऽभूत | ऽभूत् |
| ५९ | १५ | तस्य | तस्या |

| पृष्ठ | पं० | अशुद्धपाठाः | शुद्धपाठः |
|---|---|---|---|
| ५६ | २१ | पञ्चक्रोश | पञ्चकोश (पञ्चगौर) |
| ५६ | २५ | व्रह्मा | व्राह्मा |
| ५६ | २७ | यजु | यत्तु |
| ६० | १८ | प्रयागं शि | प्रयागमनुशि |
| ६० | २० | मुख्यः | मुख्यम् |
| ६१ | १ | यागात् | योगात् |
| ६१ | | पाविनी | पावनी |
| ६१ | १४ | वासुकी | वासुकी |
| ६१ | १५ | त्तरो | तरौ |
| ६१ | २७ | येषा | येषां |
| ६२ | १६ | त्रात्तरशब्दा | त्रोत्तरशब्दो |
| ६२ | १६ | स्थान | स्थाने च |
| ६३ | २ | द्रुह्यं | द्रुह्यु |
| ६३ | २४ | पञ्चक्रोश | पञ्चगौरा ( पञ्चकोर ) |
| ६४ | १० | ,, | ,, ( ,, ) |
| ६४ | १५ | ,, | ,, ( ,, ) |
| ६५ | २३ | प्रतिष्ठानं | प्रतिष्ठानत्वं |
| ६६ | ११ | बनाङ्गल | जाङ्गल |
| ६७ | २३ | राज्य | राज |
| ६८ | ४ | धार्मी | धार्नी |
| ६८ | ५ | अपि | अधि |
| ६८ | ६ | हस्तापुर | हस्तिनापुर |
| ६८ | २२ | त्वाहुरा | बाहुरा |
| ६८ | ३५ | नाम | नाम् |
| ६६ | २७ | पञ्चक्रोश | पञ्चगौरा ( पञ्चकोर ) |
| ७० | ६ | अङ्गारि | धारि |
| ७० | २४ | मनल | मनन्त |
| ७० | २७ | भूतेर् | भूतैर् |
| ७१ | ११ | वन्यवना | वत्पर्वता |
| ७१ | १२ | पर्य्यन्तिषु | पर्य्यन्तेषु |
| ७१ | १७ | कामा | कामाः |
| ७१ | १८ | विशार्य | विशीर्य |

| पृष्ठ | पं० | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ७१ | २० | नामग्र | नां सग्र |
| ७१ | २४ | विस्तृते चा | विस्तृते स्वा |
| ७१ | ३० | पूजमा | पूजया |
| ७२ | १ | पार्श्व | पार्श्वे |
| ७२ | ४ | काकुतत्स्थ | काकुत्स्थ |
| ७२ | ७ | वाहो | बाहो |
| ७२ | ७ | वद् | वदे |
| ७५ | १७ | पञ्चकोश | पञ्चगौरा ( पञ्चकोर ) |
| ७५ | २० | प्रतिभाकुतर्क्यते | प्रतिभाशालिभिरुत्तर्क्यते |
| ७५ | २१ | कुमा | कुभा |
| ७५ | २३ | पञ्चकोश | पञ्चगौरा ( पञ्चकोर ) |
| ७६ | ६ | संख्या | संस्था |
| ७६ | ११ | यावद् क्षुण्णा | यावदक्षुण्णा |
| ७६ | १६ | प्रायाः | प्राया |
| ७६ | २७ | दशाद्यु | दशद्यु |
| ७६ | ३१ | कुत्सोपाख्यानं | कुत्सकुयवीयोपाख्यानं |
| ७७ | ३ | नायकः | नामकः |
| ७७ | ८ | शतद्रुः प्राच्यां | शतद्रुप्राच्यां |
| ७७ | ८ | प्राची सरस्वती | प्राचीसरस्वती |
| ७७ | ६ | शरयू | सरयू |
| ७७ | ३२ | क्वैकै | क्वेकै |
| ७७ | ३३ | क्ये | के |
| ७७ | ३३ | सु | × |
| ७७ | ३४ | शुशुवान् | शूशुवान् |
| ७७ | ३४ | पडगृभिः | पड्गृभिः |
| ७७ | ३५ | अत्कः | अत्कः |
| ७७ | ३५ | तस्- | स्त |
| ७८ | ६ | पडगृभिः | पड्गृभिः |
| ७८ | ८ | पिपुमृंगयः | पिप्रुमृगयः |
| ७८ | ६ | कुयवः | कुषवः |
| ७८ | १३ | सवस्व | सर्वस्व |
| ७८ | १३ | वेतस | वेतसु |

| पृ० | पं० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७८ | २३ | दमर्ना | दमना |
| ७८ | २७ | स्वर्भगवान् | स्वर्गपतिर्भगवान् |
| ७९ | ३ | नत् | नात |
| ७९ | ६ | सहे | साहे |
| ७९ | ६ | देवे | देव |
| ७९ | ६ | अञ्जनी | अञ्जसी |
| ७९ | १० | अञ्जन्या | अञ्जस्या |
| ७९ | १४ | दान | दास |
| ७९ | १४ | कान | काना, |
| ७९ | १६ | रोहिण्यं | रोहिणं |
| ७९ | १६ | कदाम | दास |
| ७९ | २२ | वेशतु | वेशं तु |
| ७९ | २३ | यादय | पादय |
| ७९ | ३० | नेदीर्नों | नेदार्नी |
| ८० | २ | पडगृभि | पड्गृभि |
| ८० | २० | ततो | स ततो |
| ८० | २२ | पुरः | पुत्रः |
| ८० | २६ | नतु | ननु |
| ८० | ३५ | कालिक | कालिकः |
| ८० | ३१ | पुरां | पुरीं |
| ८० | ३६ | देशरथं | देशस्थं |
| ८१ | १ | मन्द्र | मद्र |
| ८१ | २ | देशस्थस्य | देशस्थ |
| ८१ | २ | देशस्य | देशस्थ |
| ८२ | २ | स्वमस्मिन् | स्वयमस्मिन् |
| ८२ | ६ | लाकप्रसिद्धे | लोकप्रसिद्धेः |
| ८२ | ६ | प्रतिष्ठानमा | प्रतिष्ठानं ना |
| ८२ | ११ | भद्र | मद्र |
| ८२ | २८ | गन्दर्व | गन्धर्व |
| ८३ | १ | य | थ |
| ८३ | ५ | यन्त | प्यन्त |
| ८३ | ५ | चारिना | चारिता |

| पृ० | पं० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ८३ | १४ | पृथिन्तरिक्ष | पृथिव्यन्तरिक्ष |
| ८३ | २७ | बलं | बलिं |
| ८३ | २६ | चक्षुः | यक्षुः |
| ८३ | ३० | संगताया | संगतायाः |
| ८४ | १२ | स्वतन | स्वतेन |
| ८४ | २० | क्रिया | क्रियाः |
| ८४ | २४ | तद् | तद् |
| ८५ | १८ | स्त्रीत्वाद | स्त्रीत्वाद् |
| ८५ | २२ | तन्यो | तान्यै |
| ८५ | २५ | राज्ञ | राज्ञः |
| ८६ | १ | सौम्यः | सौम्य |
| ८६ | २५ | वह्लिपते | बाह्लीपते |
| ८७ | ३० | अनिस्प | अनिस्र् |
| ८८ | २२ | क्रुन्ध्यमनो | क्रुन्ध्यमानो |
| ८८ | २८ | धर्म्मज्ञः | धर्म्मज्ञ |
| ८६ | २५ | कालापाय | कालोपाय |
| ६० | १६ | खड्गान् | खगान् |
| ६१ | १ | गहर | गह्वर |
| ६१ | २६ | कार्य | काय |
| ६१ | २६ | प्रवेश | प्रवेशे |
| ६१ | ३२ | विन | विनं |
| ६२ | १२ | नानादितं | नादितं |
| ६२ | १८ | पति | पतिं |
| ६२ | २१ | दृष्ट्वै | दृष्ट्वै |
| ६३ | १ | मूजति | मूजवति |
| ६३ | १२ | सर्वतन्त्रः | सर्वतन्त्र |
| ६३ | १६ | योग्य | योग |
| ६४ | २२ | स्थापितं | ऽस्थीयत |
| ६५ | ६ | मण्डलिक | माण्डलिका |
| ६५ | १२ | मण्डलिक | माण्डलिक |
| ६६ | ६ | भाष्यो | भागो |
| ६८ | १ | श्रुतो | श्रुतौ |

| पृष्ठ | पं० | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| ९८ | १ | सैला | सेला |
| ९८ | २ | रुका | रुक्ता |
| ९८ | १० | स्वारस्य | स्वारस्या |
| ९८ | २७ | श्राम्य | श्राम्यं |
| ९९ | ६ | यासात् | यागात् |
| ९९ | १४ | एडा | एवेडा |
| ९९ | १५ | वत्त्व | वत्त |
| ९९ | १६ | न्यपत्यत्व | न्यपित्व |
| ९९ | २१ | न्यास्ते | न्यस्ति |
| ९९ | २६ | णन्यनु | णान्मनु |
| ९९ | ३३ | भानुषे | मानुष |
| १०० | ६ | याजया | याजयो |
| १०० | १५ | तव्यं | तव्यं |
| १०० | ८ | प्रस्तावस्य इडाया | इडाया प्रस्तावस्य |
| १०० | १३ | गौरितिवा | गोरिडा |
| १०० | २२ | रूपया | रूपायाः |
| १०० | २३ | हैंव | हैव |
| १०० | २४ | प्रजायतेयन्या | प्राजायेतेया |
| १०१ | ३० | पश्यन्ते | पश्यन्तो |
| १०१ | ३२ | हतोरं | होतारं |
| १०२ | ७ | मुनु | मनु |
| १०२ | १६ | अपत्यत्व | अपित्व |
| १०२ | २७ | मियानिजयज्ञे | मियभिडायज्ञे |
| १०३ | ८ | एनं | एवं |
| १०३ | १२ | माद्रवस्यै | माद्रवसौ |
| १०३ | २२ | समानाय | सम्मानाय |
| १०३ | २७ | ध्येयम् | श्रेयम् |
| १०३ | ३२ | ख्यात | ख्यान |
| १०३ | ३१ | मनुष्यनेडा | मनुष्यश्रद्धेडा |
| १०४ | ३ | वा | ता |
| १०४ | ४ | वेशन्ते | विशन्ते |
| १०४ | ११ | मापन् | मायन् |

| पृ० | पं० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १०४ | २० | सस्येन | सस्ये |
| १०४ | २१ | स्यव | स्यैव |
| १०४ | ३४ | देवं | दूभ्रवं |
| १०५ | १० | ह्यः | यः |
| १०५ | ११ | मवापो | मपो |
| १०५ | १२ | मात्मनो | मातनो |
| १०५ | १२ | रूर्वा | रुर्वा |
| १०५ | २१ | वाद्या | वाग्वा |
| १०५ | २५ | मिकं | मिक्त्वं |
| १०५ | २८ | दृपः | दापः |
| १०५ | २८ | वा | वाः |
| १०५ | ३१ | मापन् | मायन् |
| १०५ | ३१ | पश्चि | यश्चि |
| १०६ | १२ | णान्यपि | णान्यपि |
| १०६ | १७ | वृणुते | कृणुते |
| १०६ | १७ | घरुण | वरुण |
| १०६ | १७ | द्यौ | द्यो |
| १०६ | २२ | णाविनिष्ठितेन | ण विष्ठितो न |
| १०६ | ३३ | रोत्व | ऐल |
| १०६ | ३४ | पृथिवी | पृथिवीति |
| १०७ | १ | दिडे | इडे |
| १०७ | ६ | विद्यन्मेघ | विद्युन्मेघ |
| १०७ | १० | यु हेतु | युर्हेतु |
| १०७ | १६ | निष्णाताना | निष्णातानां |
| १०७ | २० | चात्मा | चामा |
| १०७ | २१ | केशिवप्र | केशिप्र |
| १०७ | २५ | दभ्रूम् | द् भ्रूमः |
| १०७ | २५ | अधि | आधि |
| १०७ | २७ | केचदादि भौतिक | केचिदादिभौतिका |
| १०७ | ३६ | दुर्वसी | दुर्वशो |
| १०८ | २ | दसिति | दस्ति |
| १०८ | ६ | भाविता | भाविताः |

| पृष्ठ | पं० | अशुद्धपाठाः | शुद्धपाठाः |
|---|---|---|---|
| १०८ | ७ | ह्रीयते | ह्रीयन्ते |
| १०८ | ११ | परे विप्रतिष्ठिते | ऽपरे विप्रतिष्ठिते |
| १०८ | १२ | अथर्वं | अथर्व |
| १०८ | १२ | श्रताबाख्या | श्रुताबाख्या |
| १०८ | १७ | वरणाया | वरणायां |
| १०८ | २० | भ्रुवों | भ्रुवो |
| १०९ | ७ | कथञ्चिद्दहित | कथञ्चिद्दहित |
| १०९ | २६ | प्रतिपींय: | प्रातिपीय: |
| १०९ | ३२ | मोक्त | माक्त |
| ११० | ५ | मनुप | मनुष्य |
| ११० | २१ | नाभान्नेदिष्टा | नाभानेदिष्टा |
| ११० | १५ | स्वा स्या | स्वारस्या |
| १११ | १० | सुघुन्ना | सुघुन्नो |
| १११ | १५ | पर्वतोऽथित्य | पर्वतोऽपत्य |
| ११२ | ६ | मासन्तर | मासान्तर |
| ११२ | १० | तस्त | तस्य |